अनुष्टुभ भवेच्छन्द आपश्चैव तु दैवतम् ॥
सौत्रामपावभृतके विनियोगस्य कल्पितः ॥
उदुत्यमृषिः प्रस्कण्वो गायत्र सूर्यदेवता।
चित्रमित्यत कुत्सस्तु गर्वरी सूर्यदेवता ॥
प्रणवो भूर्भुवः स्वश्च गायत्र्यापि ऋचा त्रयम् ॥
अघमर्षणसूक्तस्य ऋषिरेवाघकर्मणा।
छन्दोऽवानुष्टुभं प्राक्त रापश्चैव तु दैवतम् ॥
द्रुपदावमर्षण सूक्त मार्जने व्याहरेदिति।
स्मृतिभिः परिशिष्टैश्च विशेषस्तोयसेचने ॥
उल्काज्योर्द्व विमागेन कर्तव्यः सोऽपि स द्विजै.।
आपोहिष्ठेति विज्ञेय अष्टाक्षरपद नंच ॥
पादान्ते प्रक्षिपेद्वापि पादमध्येन च क्षिपेत्।
भूमौ मूर्ध्नि तथाकाशे मुर्द्धाकाशे तथा भुवि ॥
एव वारि द्विजः सिञ्चन् तर्पयेत् सर्वदेवताः।
उदुत्यच्चित्र देवाना मुच्स्थाने नियोजयेत् ॥
हस: शुचि: सदित्यादि केचिदिच्छन्ति सूरयः।
अव्याकृतमिद ह्यासीत् सदेवासुरमानुषम् ॥
सङ्क्षेपायाहजद्द ब्रह्मा सप्तमा व्याहृती. पुरा।
भूर्भुवः स्वर्मह जनस्तपः सत्यं तथैव च ॥
आद्यास्तिस्रो महामोक्षाः सर्वत्रैव नियोजनात्।
अग्निर्वायुस्तथा सूर्यो हहस्पत्याप एव च ॥
इन्द्रश्च विश्वदेवाश्च देवताः समुदाहृताः।
गायत्र्युष्णिगनुष्टुप् च हहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगतीचैव च्छन्दास्येतान्यनुक्रमात्।

भरद्वाजः कश्यपश्च गौतमोऽत्रिस्तथैव च ॥
विश्वामित्रो जमदग्निर्वसिष्ठश्च ऋषिः क्रमात् ।
एताभिः सकलं व्याप्तमेताभ्यो नास्ति चापरम् ॥
सप्तैते स्वर्गलोका वै सत्यादूर्द्धं न विद्यते ।
तस्माल्लोकात्परा मुक्तिरर्वाचीना यदेच्छया ॥
प्राणायामेष्वेता अभ्यस्या पूर्वकादिभिः ।
ॐमापोज्योतिरित्येतच्छिरः पश्चात्प्रयुज्यते ॥
प्रत्योङ्कारसमायुक्तो मन्त्रोऽयं तैत्तिरीयके ।
अतोङ्कारवदार्थादि विदुर्ब्रह्मविदो जनाः ॥
प्रणवाद्यन्त गायत्री प्राणायामेष्वयं विधिः ।
गायत्र्यादिकचित्राख्यैर्मन्त्रैश्च प्रागुदीरितैः ॥
उपासीरन्द्विजाः सन्ध्यां यावन्नोदेति भास्करः ।
गङ्गा बालपवित्रेण यस्तु सन्ध्यामुपासते ॥
सर्वतीर्थाभिषेकं तु लभते नात्र संशयः ।
गोवालदर्भसारङ्गखड्गकनकमेव च ॥
दर्भताम्रतिलं चापि एतैस्तर्पणाद्द्विजाः ।
स मन्त्रार्घ्यं पितृन्देवानात्मानं त्रिदिवं नयेत् ॥
त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।

विलम्ब्यासौ निवर्त्तन्ते मन्देहानामदर्शनात्॥
रवेरप्ययवो ह्यस्य यातायाता ह्यमर्थितः।
अगाम वयरीराणा स्वामिनैव लयङ्गताः॥
हेपाग्रज्ञमकुर्व्वाणाः शफस्फुरणवर्जिताः।
स्तब्धाङ्गा निर्जयाज्जाता सूर्यस्यन्दनवाजिनः॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः।
यत्सन्ध्यान्ते उपासीत प्रक्षिपन्ति जलं रूहत्॥
ॐङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
दग्धेरंस्तेन ते दैत्या वज्रिभूतेन वारिणा॥
सहस्राशुरथे तिष्ठन् योऽधीयानश्च तु स्तुतौ।
याज्ञवल्क्यः समीक्षेत ऋषीणामुक्तवासनः॥
मन्त्रे त्वनुदिवादित्ये सन्ध्योपासिकरो भवेत्।
उदिते सति या सन्ध्या बालक्रीड़ोपमा च सा॥
सन्ध्या येन न विज्ञाता स्नात्वा नैव ह्युपासिता।
स जीवन्नेव शूद्रत्वं ह्याशु गच्छति मानवः॥
मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च।
वारुणं मानसञ्चेति सप्त स्नानं क्रमेण तु॥
शन्न आपस्तु वै मान्त्रं मृदालम्भस्तु पार्थिवम्।
भस्मना स्नानमाग्नेयं गोरेणूनानिलं स्मृतम्॥
आतपे सति या वृष्टि दिव्यस्नानं तदुच्यते।
बहिर्नद्यादिके स्नानं वारुणं प्रोच्यते बुधैः॥
यद्ध्यानं मनसा विष्णोर्मानसं तत्प्रकीर्त्तितम्।
असामर्थ्येन कायस्य कालशक्त्याद्यपेक्षया॥
तुल्यं फलानि सर्वाणि स्मृत्याह पराशरः।

स्नानाना मानसस्थान मन्वाद्यै परमं स्मृतम् ॥
कृतेन येन सुच्यन्ते गृहस्था अपितु द्विजा. ।
नित्यादीना त्रयाणा तु स्नानानामोघम परम ॥
सद्य पापहर प्रोक्त, प्राजापत्यव्रताधिकम् ।
उषस्युषसि यत्स्नान क्रियतेऽ सुदिनेऽरवौ ॥
प्रजापत्येन तत्तुल्य महापातकनाशनम ।
प्रातरुत्थाय यो विप्र प्रात स्नायी सदा भवेत् ॥
सर्वपापविनिर्मुक्तः पर ब्रह्माधिगच्छति ।
अस्नातो नाचरेत्कर्म जपहोमादि किञ्चन ॥
विद्यन्ते च सुहृत्मानि दूषिणानि चरन्ति च ।
अङ्गानि समता यान्ति उत्तमान्यधमै रुह ।
अत्यन्तमलिन कायो नवच्छिद्रसमन्वित ।
स्रवते च दिवारात्रौ प्रात स्नानेन शुद्ध्यति ॥
उष स्नानं प्रशंसन्ति सर्वे च पितरोऽमरा ।
दृष्टादृष्टकर पुण्य शसन्ति पितरोऽपि हि ॥
प्रात स्नायी हि यो विप्र सोऽर्ह स्यात्सर्वकर्मसु ।
नतृकृत कर्म यत्किञ्चित्तत्सर्व स्याद्यथायवत ॥
अविहान स्नानकालेतु य कुर्याद्दन्तधावनम् ।
पापीयान् रौरवं याति पितृघ्यापहतो ध्रुवम ॥
यच्च श्मश्रुषु केशेषु यदा देहे च लोमसु ।
हस्ताभ्याश्च न वस्त्रेण जलं विद्वान् हि मार्जयेत् ॥
मार्जिते पितर सर्वे सर्वा अपिच देवता ।
तथा सर्वे मनुष्याश्च त्यजेरन नियत द्विजम् ॥
स्नान मश्चिन्तितं सर्वे तीर्थं पितृ-वौकस ।

ततो न द्यातमो गच्छन्निराशा स्तेऽपयन्ति हि ॥
येतु स्नानार्थिन स्तीर्थं सद्विन्तन्ति जलाशयाः।
तद्देह मुपतिष्ठन्ति वसैर पितृदिवौकस ॥
अतो न चिन्तयेत्तीर्थं व्रजेदेवतु चिन्तितम्।
देवखातनदीस्रोत सर:सु स्नान माचरेत् ॥
स्नानं नद्यादि वन्येषु सद्भिः कार्यं सदम्बुषु।
कृत्रिमन्तोय कूपस्थं तोय तत्र तु कृत्रिमम् ॥
न तीर्थे स्त्र्याकुले स्नायान्न सज्जनसमाश्रिते।
दर्भहीनोऽन्यथिपन्तु न नग्नो न शिरो विना ॥
कदाचिद्विदुषा मिथ्या न स्नातव्यं पराम्भसा।
अभःसद्दु ष्कृतांशेन स्नानकर्त्तापि लिप्यते ॥
पञ्च वा सप्त वा पिण्डान् स्नायादुद्धृत्य तत्र तु।
वृथास्नानादिकानीह विशेषेण विवर्जयेत ॥
वृथा चोष्णोदकस्नान वृथा जप्यमवैदिकम्।
वृथा चाश्रोत्रिये दान वृथा भुक्तमसाक्षिकम ॥
मासे नभसि न स्नायात्कदाचिन्निम्नगासु च।
रजस्वला भवन्त्येता वर्जयित्वा समुद्रगाः ॥
नापो मूत्रपुरीषाभ्या नाग्निर्दहति वर्मणा।
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ॥
न स्नायात् क्षोभितास्वासु स्वयं न क्षोभयेच्च ताः।
न निर्गतासु तीर्थाच्च पतन्तीष्वाहतासु च ॥
रविसङ्क्रान्तिवारेषु ग्रहणेषु शशिक्षये।
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥
न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा तथा।

इष्टाभिरपि स्नाया दाहृताभिर्हिजातिभि. ॥
स्वभावाभिरनुष्णाभि: शुष्काभिस्तथा द्विज: ।
नवाभिर्निर्दिष्टाभिरसंसृष्टाभिरन्यशः ॥
य स्नानमात्रैर्नित्य त प्रहृष्यन्ति देवता. ।
तस्माद्गङ्गुरुष्वं स्नान सदा कार्यं द्विजातिभि-॥
उत्साहाप्यायनस्नान्त प्रयान्ति शक्तिबुद्धिदम् ।
की त कान्ति वपु पुष्टि सौभाग्यायु प्रवर्धनम् ॥
स्वर्गश्च दशभिर्युक्त गुणै. स्नानं प्रशस्यते ।
सूर्य दि दिनवारेषु तैलाभ्यञ्जनपूर्वकम् ॥
हृत्तापकीर्तिमरण सुतस्नानाभिस्त्यव ।
आयुश्चार्कादिवारेषु तैलाभ्यङ्गे फल क्रमात् ॥
जलावगाहन नित्य स्नान सर्वेषु वर्णिषु ।
शक्तिरचरणः कार्य तस्याथ विधिरुच्यते ॥
गोमयमृत्कुशाश्चैव पुष्पाणि पात्रका तथा ।
स्नानार्थी प्रयतोनित्य स्नानकाले सदाहरेत् ॥
स्वमनोऽभिमत तीर्थं गत्वा प्रक्षाल्य पादयो. ।
हस्तौ चाचम्य विधिवच्छिष्यावन्यैकचेतसा ॥
मृदम्बुभिश्च गात्राणि क्रमात्प्रक्षालयेद्यथा ।
पादौ जङ्घे कटीश्चैव क्रमात्प्रागं जलै स्वभि. ॥
प्रक्षाल्य हस्त चाचम्य नमस्कृत्य च तज्जलम् ।
गुह्योपगुह्यम् इत्येतद्यजुषा प्रयताञ्जलि: ॥
उरू देहेतिमन्त्रे च कुर्यादापो भिमन्त्रिण. ।
विधिश्चा कथय. केचिन्मन्त्रात्यार्थवेदिन ॥
यत्र स्नानेषु यत्तीर्थं नदी पुण्यतरा तथा ।

ता ध्यायेन्मनसा नित्यम न्यतीर्थं न चिन्तयेत् ॥
गङ्गादिपुण्यतीर्थानि कलिमादिषु संस्मरेत्।
ता ध्यायेन्मनसा वापि अन्यतीर्थं न चिन्तयेत्।
महाव्याहृतिभिः पश्चादाचामित्प्रयतोऽपि सन्।
उदुत्तम इतिह्यम् मन्त्रेण प्राङ्मुखो विशेत् ॥
येऽग्नयो दिवि चेत्येतत्कुर्य्यादात्मान लतः।
सूर्यं पश्यन् जल सुक्षा समुत्तीर्ये ततः स्थलम् ॥
आचम्याथ हरेन्मृत्स्नान्तया काय समालभेत्।
अश्वक्रान्ते रथक्रान्ते इत्याद्यपि पठन्निह ॥
मृत्तिका हरणे चैव इति वाशिष्ठजोऽब्रवीत्।
समालभेत्त्रिभिर्मन्त्रै रिद विष्णुादिभिर्द्विजः ॥
शिरश्चासा वक्ष ऊरु पादौ जङ्घ क्रमेणतु।
भास्कराभिमुखो मज्जेदापो ह्यस्मानिति त्रिभिः ॥
उद्धृत्य सर्वगात्राणि निमज्याथ पुनः पुनः।
उत्तीर्थ्याचम्य गात्राणि गोमयेनाथ लेपयेत् ॥
मानस्तोक इति स्तुत्वा मान्वदङ्ग क्रमेण तु।
इमं मे वरुण। तत्त्व. सत्यं नय उदुत्तमम् ॥
ऋच लवमथेत्येतैरात्मान अभिषेचयेत्।
निमज्याचम्य चात्मानं दर्भैर्मन्त्रैश्च पावयेत् ॥
हविष्मतीरिमा आप इदमाप स्तथैवच।
देवीराप इति द्वाभ्यामापो देवीरितीत्यृचा ॥
सस्मृत्य द्रुपदां देवीं शन्नो देवीरपा रसम्।
प्रत्यङ्ग मन्त्रनवकमापो देवी पुनन्तु माम् ॥
चिन्तित मां पुनात्वेतन्मन्त्रे णापि च पावयेत्।

हिरण्यवर्णा इति च पावमाना तथापरे ॥
तरत्समन्दि धावन्ति पवित्राण्यानि शक्तित. ।
स्नानकर्मात्मकैर्मन्त्रै रन्यैरप्यम्बु दैवतै. ॥
स्नात्वात्मानं निमज्याय आचान्तस्त्वन्यदाचरेत् ।
कायं कायप्रदेशानां तथा चैवोदकस्य च ॥
प्राक्तत्वे सति चैवायं विधिरन्यो विपर्यये ।
सोङ्कारांश्चैव गायत्री महाव्याहृतिभि स्त्र ॥
त्रिसन्धे वैश्रधावत्नी स्नानादिद्वानपि द्विजः ।
च्छन्दोमन्य परैर्युक्त स्वशाखाक्षरसंयुतम् ॥
आरत्य प्रणवं स्नायाच्छतमर्धशतं दशम् ।
चिद्रूप परम ज्योतिर्निरालम्बमनामयम् ॥
अव्यक्त मव्ययं शान्त स्नायादापि हरिं स्मरेत् ।
गायत्री वारिसस्नात. प्रणवै निर्मलाकृत. ॥
विष्णुस्मरण संशुद्धि स्त्र्यह सर्वेषु कर्मसु ।
योऽधीते वेदवेदार्थं सुस्नातः सर्ववारिषु ॥
शुद्धे दशुचिन, स्नान्तस्त्वच्छ,च्चसु शुचिर्यत ।
मन्त्रैश्च मनसा स्नानं नो,गोमयस्तदम्बुभिः ॥
तैश्चेष्ठोरुरमत्स्वाश्च स्नानस्य फलमाप्नुयु. ।
भाव पूत पवित्र स्नान्मन्त्रपूत स्तथा नर ॥
उभयेन पावितुस्तु नित्यस्नायी शुचिर्नर. ।
विधिदृष्ट तु यत्कर्म करोतु विधिना नरः ॥
न किञ्चित् फलमाप्नोति क्लेशमात्र हि तस्य तत् ।
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ॥
तिष्ठन्तोऽपि च ते स्नाने फल नैवाप्नुयुर्न्नता: ।

विधिहीनं भवेद्दुष्टं कृतमश्रद्धयापि च।
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः।
श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः॥
शुचिभिर्ह्येकचित्तैस्तु तदनन्ताय कल्पते।
उदात्तमनुदात्तञ्च विसर्गान्तं तथैव च॥
द्रुतञ्च स्वरितोदात्तं स्वरं विन्द्यात्तथा प्लुतम्
स्वरान्तं व्यञ्जनान्तञ्च विसर्गान्तं तथैव च॥
सानुस्वारं पृथक्कञ्च ज्ञातमन्यपरञ्च यत्।
हन्त शतक्रतुर्हन्ति वज्रेण शतपर्वणाम्॥
यथा तथा प्रवक्तारं मन्त्रहीनं स्वरादिभिः।
स्वरतो वर्णतः सम्यक् सन्ध्याध्यानजपादिषु॥
सर्वे मन्त्राः प्रयोक्तव्याः हीनाः स्युरफला नृणाम्।
नाभेरधस्तादङ्गानि चालयित्वा मृदम्भसा॥
उपविष्टः शिक्तवस्त्रे मन्त्रैः प्रोक्ष्य शुचिर्भवेत्।
चतुरश्चतुरस्त्वङ्‌घ्रो द्वौ द्वौ च जङ्घयोस्तथा॥
द्वौ द्वौ च जानुनोर्न्यस्य ऊर्वोः पञ्च च पञ्च च।
द्वावप्येवं तथा गुह्ये दश द्वादश वक्षसोः॥
द्वौ द्वौ गले च बाह्वोश्च द्वौ द्वे च सुमुखेष्वपि।
द्वौ द्वौ च चक्षुषोः श्रुत्योः प्रणोङ्काराय मूर्द्धनि॥
न्यस्तप्रणवसर्वाङ्गः स्नातः स्यात्सर्ववारिषु।
अकारं मूर्ध्नि विन्यस्य उकारं नेत्रमध्यतः॥
मकारं कण्ठदेशे तु ब्रह्मीभवति वै द्विजः।
अनङ्गाक्लिष्टधौतेतु विद्वान्न रक्तवाससी॥
परिधाय मृदम्बुभ्यां करौ पादौ च मार्जयेत्

तद्वासतोरसम्पत्तौ शोणक्षौमाविकानि च ॥
कुत्सपं योगपट्टस्वा द्विवासास्तु यथा भवेत् ।
न जीर्णं नीलकाशार्यां माञ्जिष्ठेन च वाससा ॥
मूत्राद्युपगतिर्नैव शुचिः स्यान्नैकवाससा ।
एकं वासो यथा प्राप्त परिधाय मनः शुचिः ॥
अन्ये कृत्वोत्तरामङ्गम् आचम्य प्राङ्मुखः स्थितः ।
प्रत्योङ्कारसमायुक्ताः प्रणवाद्युतकास्तथा ॥
महाव्याहृतयः सप्त देवतार्षादिसंयुतम् ।
प्रणवाद्यन्ता गायत्र्या तस्याः शिरस्तथैवच ॥
त्रिरावर्त्तनमेतस्याः प्राणायामो विधीयते ।
शक्त्या सुसंयम कृत्वा तथाचम्य विधानतः ॥
उपास्य विधिवत्सन्ध्यामुपस्थाय च भास्करम् ।
गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन् ॥
अन्वारब्धेन तोयेन पाणिना दक्षिणेन तु ।
तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना ॥
ब्रह्मेशकेशवान् पूर्वं प्रजापतिमथाच्युतिम् ।
छन्दो यज्ञान्नृषीन् सिद्धानाचार्यान् स्तनपायिनः ॥
गन्धर्वंवत्सरर्तूंश्च मासान्दिननिशानि च ।
देवान्देवासुरांश्चापि नागान् नागकुलानि च ॥
सरितः सागरान् सौर्यान् पर्वतान् कुलपर्वतान् ।
क्षितरान् खेचरान्यक्षान्मनुष्यांश्च तर्पयेत् ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
आसुरिः कपिलश्चैव वोढः पञ्चशिखस्तथा ॥

सुपर्णाश्च पिशाचाश्च भूतान्यथ पशूंस्तथा ॥
वनस्पतींश्चौषधीश्च भूतग्राम चतुर्विधम् ।
ब्रह्मादयो मया हूता आगत्य ददतु तेपुः॥
अद्य मा प्रकुर्वन्तु प्रसीदन्तु ममोपरि ॥
ततः पूर्वाग्रदर्भेषु साग्रेषु सकुशेषु च ॥
प्रादेशिकेषु शुद्धेषु ब्रह्मादिभ्योऽम्बुनिक्षिपेत् ।
अन्वारभ्यापसव्येन पाणिना दक्षिणेन तु ॥
दक्षिणं जानु भूलग्नो देवेभ्यः सेचयेज्जलम् ।
देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा ॥
मन्यन्ते कवयः केचिदित्येव तर्पणक्रमः ।
तर्पमाणेषु कर्मत्वं निजत्वञ्च क्रियापदम् ॥
तर्पयामि पितॄन्देवानित्याङ्करपरे पुनः ।
सिच्यमानेन तोयेन मन्यन्ते मुनयोऽपरे ॥
देवास्तृप्यन्तु पितरः तृप्यन्त्विति निदर्शनम् ।
उदीरतामङ्गिरस आयन्तुनोर्जमित्यभि ॥
पितृभ्यश्च स्वधायिभ्यो ये चेह नियतास्तथा ।
अग्निष्वात्तापङ्क्ताश्च तथा बर्हिषदोऽपि च ॥
येन पूर्वे च पितरः सोमपाला सुदीरयेत् ।
आवाह्य च पितॄनेतैरथ सव्योपवीतिना ॥
दक्षिणाभिमुखो ह्याभ्याङ्गराभ्या मभ्युक्षेचयेत् ।
भूलग्न सव्यजानुश्च दक्षिणाग्रकुशेषु च ॥
रूप्यरौप्यतिलैस्ताम्रदर्भमन्त्रै क्षिपेत्तथ ।
विना रौप्यसुवर्णाभ्याम्बिना ताम्रतिलैरपि ॥

विना दर्भैश्च मन्त्रैश्च पितृणान्नोपतिष्ठति ॥
दर्भे लौहितदर्भैश्च काशवीरणवल्वजैः ॥
शुक्लधान्यतृणैर्वापि दर्भकार्यं भवेद्द्विज ।
न तर्पयेत्पितृँस्तैस्तु विद्वानद्भिः कथञ्चन ॥
पात्रस्थाभिः सदर्भाभिः सतिलाभिश्च तर्पयेत् ।
वस्तुन् रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥
एते च दिव्यपितर एतदायत्तमानुषाः ।
ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलोऽनिलः ॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।
अजैकपाद् हि बुध्नो विरूपाक्षोऽथ रैवतः ॥
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ।
सावित्रश्च जयन्तश्च पिनाकीत्यपराजितः ॥
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ।
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा ॥
अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ।
एते वै द्वादशादित्या देवानां परमाः स्मृताः ॥
एवञ्च दिव्याः पितरः पूज्याः सर्वे प्रयत्नतः ।
कव्यवालोऽनलः सोमो यमश्चैव तथार्यमा ॥
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ।
एते चान्ये च पितरः पूज्याः सर्वे प्रयत्नतः ॥
एतांस्तु तर्पयेत् सर्वान् पुरुषास्तर्पिताश्च भिः ।
यमाय धर्मराजाय मृत्यवे च तथान्तक ॥
वैवस्वताय कालाय सर्वभूतक्षयाय तथा ।
औदुम्बराय नीलाय नभाय परमेष्ठिना ॥

चित्रश्च चित्रगुप्तश्च वृकोदर स्तथार्यमा।
एतैस्तु तर्पितैः सद्भिर्विवस्वांस्तर्पितो नृभिः॥
तस्मात्प्राक् तर्पयित्वैतान् त्रिं शतीन्तर्पयेत्ततः।
मातामहान्मातुलांश्च सपिसम्बन्ध बान्धवान्॥
स्वजनज्ञातिवर्गीयानुपाध्यायान् गुरूनपि।
मित्रान् भृत्यानपत्यांश्च ये भवन्ति तदा स्मृतौ॥
तान् सर्वांस्तर्पयेद्विद्वान् इहन्ते ते यतो जलम्।
जलस्थश्च जले सिञ्चेत् स्थलस्थश्च तथा स्थलम्॥
पादौ स्थाप्याभयश्चैव भवेत्तूभयतः शुचिः।
गोष्टङ्गमात्र सुतुचिप्य करौ विप्रो जले स्थितः।
अम्बरे तु क्षिपेद्वारि आकाशे दक्षिणामुखः॥
पितॄणां स्थानमाकाशं दक्षिणादिक्तथैव च।
स्थलगो नार्द्रवासास्तु कुर्याद्वै तर्पणादिकम्॥
प्रेताहते नार्द्रवासा नैकवासाः समाचरेत्।
एवं हि तर्पणं कृत्वा सर्वेषां विधिवद्द्विजः॥
निष्पीडयेत् स्नानवस्त्रं येन स्नातो भवेद्द्विजः।
निष्पीडयति यः पूर्वं स्नानवस्त्रं मजानतः॥
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः।
निष्पीडयेत् स्नानवस्त्रं तिलदर्भैः समन्वितम्॥
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः।
एषु चेत्पीडयेद्वस्त्रं राक्षस तदतिक्रमात्॥
वस्त्रनिष्पीडने मन्त्र मिमं श्लोक मुदाहरेत्।

तिलदर्भसमायुक्तं कुर्य्यात्तुर्नष्टदेहिनाम् ॥
ये मे कुले लुप्तपिण्डाः पुत्रदाराविवर्जिताः ।
तेषां तु दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥
पितृवंशे मृता येच मातृवंशे तथैवच ।
एवं तृप्तिमवेत्तेषां तिलैस्तु सह वारिभिः ॥
वस्त्रस्य मलनिक्षेपः शौचस्नानादि कुर्वताम् ।
तस्य पापव्यपोहार्थमिमं मन्त्रमुदीरयेत् ॥
यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ।
तस्य पापस्य निष्कृत्यै यक्ष्मणे सर्वं तृप्यताम् ॥
यक्ष्मपिभ्योऽथ यक्ष्मभ्यो ददामीदं जलाञ्जलिम् ॥
यन्त्यर्या घ्नन्ति ते सर्वं सुकृतं पूर्वसञ्चितम् ॥
अपुत्रा ये मृताः केचित्पुमांसो योषितोऽपि वा ।
अस्मिन्वंशे पितृभ्यो वै दत्तं वस्त्रजलं मया ॥
नास्तिक्येनापि यो विप्र तर्पयेत्पितृदेवताः ।
स तत्त्वमिकरो धर्मान् प्राप्नुयात्परमाङ्गतिम् ॥
नास्तिक्यात् यमतो यस्तु तर्पयेन्न पितृन् द्विजः ।
पिबन्ति देहिन स्वायं पितरस्तज्जलार्थिनः ॥
पितृणां पितृतीर्थेन देयानां देवकेन तु ।
इति मत्वा तु कुर्वाणा मुच्यन्ते गृहमेधिनः ॥
पञ्च तीर्थानि विप्रस्य करे मध्याय दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यन्तु सौमिकम् ॥
ब्राह्मं पश्चिमलेखायां दैवं स्यादङ्गुलमूर्धनि ।
प्राजापत्यं कनिष्ठादौ मध्ये सौम्यं विजानतः ॥

अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम् ।
कुर्यादङ्गङ्गैव सम्यक् ज्ञात्वा विधानतः ॥
स प्राप्नुयाङ्गस्तो।पि ब्रह्मणः पद मव्ययम् ।
स्नात्वा हुत्वा च जप्त्वा च दत्त्वाचैव तु योऽश्नुते ॥
अमृत सोऽश्नुते नित्यं तस्य स्थान मनामयम् ।
अस्नात्वाश्नुमलं भुङ्क्ते अजप्त्वा पूयशोणितम् ॥
अजुह्वंश्च क्रमीन् कीटान् अददश्च शकृत्तथा ।
आह्लादकरणं स्नानं दुःखशोकापहन्तथा ॥
दुःस्वप्ननाशनञ्चैव कार्यं स्नानमतः सदा ।
चित्तप्रसादं बलरूप तपांसि मेधा
मायुष्यशौचसुभगत्वमरोगिताञ्च ।
ओजस्वितान्त्विप मदात्पुरुषस्य वीर्यम्
स्नानं यशोविभवसौख्यमलोलुपत्वम् ॥
गीर्वाणवृन्दद्विजसत्तमस्तुतः
प्राप्तो मयायु य वशिष्ठयौवन ।
पापप्रनाशं वितनोति य स्नुतः
प्रचोदित, स्नानविधिः सलेशः ॥
उद्देशतो मया प्रोक्त, स्नानस्य परमो विधिः ।
द्विजन्मना हिताथन्तु जपस्यातः परं विधि ॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां षट्कर्मस्नानविधिर्नाम तृतीयोऽध्याय, । ३ ।

# चतुर्थोऽध्यायः ।

जपस्यातः प्रवक्ष्यामि विधिं पराशरोदितम् ।
यावद्विध जप यद्यद्यथाकार्यं द्विजातिभि ॥
जप्यानि ब्रह्मसूक्तानि शिवसूक्तानि चैव हि ।
वैष्णवानि च सूक्तानि तथा पौराणनेकधा ॥
सारस्वतानि दौर्गाणि च ऋग्यान्यनलानि च ।
पौराणिकानि चान्यानि तथा सिद्धान्तिकानि च ॥
सर्वेषा जपसूक्ताना ऋचा च यजुषा तथा ।
साम्ना चैकाक्षरादीना गायत्री परमो जपः ।
तस्याश्चैवतु ॐकारो ब्राह्मणाय उपासित. ।
आभ्यान्तु परम जप्यं त्रैलोक्येऽपि न विद्यते ॥
तयोश्च दैवतार्षादि समासात्तोऽभिधीयते ।
येन विज्ञानमात्रेण द्विजो ब्रह्मत्व मश्नुते ॥
आसीन्नच यदा किञ्चित्सदेवासुरमानुषे. ।
तदेवाचरमेवासीदात्मविध्वस्तविश्वक ॥
गतभीरद्वितीयोऽपि एकाकी दिवि मोदते ।
चिन्तयामास गायत्री प्रत्यचा साऽभवत्तदा ॥
गायत्री सा अवत्पत्नी प्रणवोऽभूत्पतिस्तथा ।
पुनरन्यो च दम्पत्याविति ताभ्या सभूर्ज्जगत् ॥
प्रणवो हि पर तत्व त्रिदेवं त्रिगुणात्मकम् ।
त्रिवेदत्व त्रिधामञ्च त्रिप्रञ्च त्रिरवस्थितम् ॥
त्रिमानञ्च त्रिकालञ्च त्रिलिङ्ग कनयो विदु ।

सर्वमेतत्त्रिरूपेण व्याप्तं तु प्रणवेन तु ॥
ऋग्यजुः सामवेदश्च त्रिवेद इति कीर्तितः।
सत्व रज स्तमश्चैव त्रिगुणस्तेन चोच्यते ॥
ब्रह्मा विष्णुस्तथेशान स्त्रिदैवत मितीर्य्यते।
अग्निः सोमश्च सूर्य्यश्च त्रिधामेति प्रकीर्तिताः ॥
अन्तःप्रज्ञ वहिः प्रज्ञ घनप्रज्ञ मुदाहृतम्।
हृत्कण्ठे तालुके चेति त्रिस्थान मिति कीर्त्यते ॥
अकारोकारमश्चेति त्रिमात्रा उच्यते सुत ।।
भूतभव्यं भविष्यञ्च त्रिकाल मिति स स्मृतः ॥
स्त्रीपुन्नपुंसकञ्चेति त्रिलिङ्गेति प्रकीर्त्तितः।
विश्वभावस्थितो वेदो मन्त्रयो ब्रह्मवादिभिः ॥
पर्यन्तमृति यच्चैतद्विश्व मुत्सृजते यतः।
निर्मोचकः समस्तोऽपि सान्दरपि निराश्रिकः ॥
स जप्यः सर्वदा सद्भिः ध्यातव्यश्च विधानतः।
वेदेषु चैव शास्त्रेषु बहुधा स प्रकीर्तितः ॥
तथा सत्यपि चैकोऽय पट्कारात्स्तदा स्थितः।
कर्मारम्भेषु सर्वेषु त्रिमात्रं सम्प्रकीर्तितः ॥
स्थितो दत्त तथोङ्कारः स्मर्तव्यः स तथैव हि।
ऋग्वेदः स्वरितोदात्त उदात्तस्तु दत्तः श्रुतौ ॥
सामवेदः स विज्ञेयो दीर्घः स्वप्नुत एव च।
सनत्कुमारसिद्धान्ते प्रणवो विष्णुरुच्यते ॥
यस्मिन्स्तस्य च विश्रान्ति स्तत्पर ब्रह्मसंज्ञितम्।
उच्चारितस्य तस्याथ विश्रान्तस्य यदक्षरम्।

तदक्षरं समाध्यायेद्यस्मात्तेव स लीयते ॥
घण्टास्त्रनितवत्तस्य विश्रान्तिः शब्दवेधसः ।
कुर्वीत ब्रह्मविद्विमो यदीच्छेद्योगमात्मनः ॥
सर्वस्यापि च शब्दस्य ह्यन्तमुच्चारितस्य च ।
स ध्यायेद्यस्तु स ज्ञानी शब्दब्रह्मविदुच्यते ॥
याज्ञवल्को मुनीनाञ्च प्राब्रवीज्जनकस्य च ।
वर्षशतेनापि न ब्रूयात् स्वभवे शब्दवेधसः ॥
तैलधारामिवाच्छिन्नदीर्घघण्टानिनादवत् ।
अवाग्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥
स्थित्वा सर्वेषु शब्देषु सर्वं व्याप्त मनेन हि ।
न तेन हि विना किञ्चिदक्षं यान्ति गिरा यतः ॥
उद्गीत मक्षर ह्येतदुद्गीथञ्च उपासते ।
उपास्यो मध्यतस्त्वेष दानं विश्रामयेद्धृदि ॥
प्रणवाद्याः स्मृता वेदाः प्रणवे तर्पणे स्थिताः ।
वाङ्मयं प्रणवं सर्वं तस्मात्प्रणव मभ्यसेत् ॥
ब्रह्मार्षिस्तत्र विज्ञेयमग्निश्च दैवत मुच्यते ।
आद्यच्छन्द स्वरे तत्र नियोगो दृयाति कर्मणि ॥

उत्पन्नमेतत् यजतः समस्तम्
व्याहृत्य तिष्ठेत्प्रलयेऽपि यत्र ।
एकाक्षरेणापि जगन्ति येन
व्याप्तानि कोऽन्यः परमोऽस्ति तस्मात् ॥
ध्येयं न जप्य न च पूजनीय
तस्मान्न देवाक्षरणीय मन्यत् ।

दुस्तार संसारपयोधिमग्न-
तारय विष्णुप्रणवः स पुज्यः ॥
उक्तमुद्दे शतो द्योतत ह्यर्थं मेकाक्षरस्य च ।
जप्या च सतत देवी गायत्री साधुनोच्यते ॥

इति श्रीवृहत्पाराशरीये षट्कर्माणि स्वरूपवर्णन नाम चतुर्थोऽध्याय. ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

गायत्र्या. सम्प्रवक्ष्यामि देवार्षादिक्रमेण तु ।
अक्षराणाञ्च विन्यासं तेषाञ्चैव तु देवता ॥
जपे यथाविधा कार्य्या यथाविधा च सार्थ्येत् ।
होमे यथा च कर्त्तव्या यथाय वाभिचारके ॥
यत्फलं जपहोमादौ यथावक्ष्यते च सा ।
ध्यातव्या च यथा देवी यथावत्तन्निबोधत ॥
गायत्री तु पर तत्व गायत्री परमा गति ।
सर्व्वाऽमरैरिय ध्याता रत्य व्याप्त तेया जगत् ॥
उत्पाद्यते त्रिपादाया तस्या पुनर्निवेशितम् ।
गायत्री प्रकृतिर्ज्ञेया ॐङ्कार पुरुष स्मृत. ॥
ताभ्या उभयरूयोगाज्जगत्सर्व प्रवर्त्तते ।
पादास्त्रय स्त्रयो वेदा स्तेषु तत्वाक्षराणि च ॥
चतुर्विंशतिरेव स्यात्तैर्व्याप्तमखिल जगत् ।

आदाय चैकं प्रथमन्तु पादं ऋग्भ्यो द्वितीयन्तु तथा यजुः
साम्नं तृतीयन्तु ततो भवेन्मा सावित्र्यदेवी स्वयमेव सर्गे ॥
दैवत्यमस्याः सविता सुरार्च्यं च्छन्दोऽपि गायत्रमभूच्च तस्य
विश्वस्य मित्रो द्विजराजपुत्रो मुनिर्नियोगस्तु जपादिकेषु
अस्यास्तु तत्त्वाश्चतुर्विंशतिस्तु चत्वारि पादत्रितयन्तु तस्याः
भूरादिभिस्तिसृभिः सम्प्रयुक्ता सोङ्कारमेतद्वदनं परस्याम् ॥
केचिद्भुताशं वदनं वदन्ति सौविप्रदेव्याः श्रुतितत्त्वविज्ञाः
इमाश्च वक्त्रं सकलामराणामित्येतया व्याप्तमशेषमेतत् ॥
भूम्यादिकेन त्रितयेन पादं पादश्च वेदत्रितयेन चास्याः ।
प्राणादिकेन त्रितयेन पादं पादौ त्रिभिर्व्याप्तमशेषमस्याः

यस्तूर्य्यमस्या द्विज वेत्ति पादं
स वेत्ति विद्वान् परमं पदन्तु ।
व्याप्तिं परस्याः सकलापि चैषा
यो वेत्ति चैनां स तु वित्तमः स्यात् ॥
गायत्रीं यो विजानाति ज्ञात्वा नैव उपासयेत् ।
नामधारकमात्रोऽसौ न विप्रो ह्यपलोऽपि सः ॥
किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ।
साङ्गैः सावित्रीहीनेन न विप्रत्वमवाप्यते ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥
गायत्री चैव वेदाश्च ब्रह्मणा तोलिता पुरा ।
वेदेभ्यश्च सर्वेभ्यो गायत्र्यतिगरीयसी ॥
तदक्षरेषु दैवत्यं चतुर्विंशति कथ्यते ।

सन्न्यासं यद्विवोधेन कुर्वन् ब्रह्मत्वमाप्नुयात् ॥
जानीयादक्षरं देव्याः प्रथमामाश्रशुलणे ।
प्राभञ्जनं द्वितीयन्तु तृतीयं ग्निदैवतम् ॥
विद्युतञ्च तुरीयन्तु पञ्चमन्तु यमस्य तु ।
षष्ठन्तु वारुणं तत्त्व सप्तमन्तु दृहस्पतेः ॥
पार्ज्जन्यमष्टमं तत्त्व नवमं चन्द्रदैवतम् ।
गान्धर्व्वं दशमं विद्यात्त्वष्टुरेकादशं तथा ॥
मैत्रावरुणमन्यद्वै पुष्णस्तथा त्रयोदशम् ।
चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा श्रुतम् ॥
मरुद्देवात्मकं ज्ञेयं पञ्चदशं यदक्षरम् ।
सौम्यञ्च षोडशं तत्त्व माङ्गिरसमथापरम् ॥
विश्वेषाञ्चैव देवाना मष्टादशमथाक्षरम् ।
अश्विनो चोनविंशन्तु विंशं प्राजापतेर्विदुः ॥
एकविंशं कुवेरस्य द्वाविंशं शङ्करस्य च ।
त्रयोविंशं तथा ब्रह्म चतुर्विंशन्तु वैष्णवम् ॥
इति ज्ञात्वा द्विजः सम्यक् स सर्व्वाक्षरदेवताः ।
कुर्व्वन् जपादिकं कर्म परं श्रेयोऽधिगच्छति ॥
पादाङ्गुष्ठादिमूर्द्धान्त मात्मनो वपुषि न्यसेत् ।
अक्षराणि च सर्व्वाणि पृच्छन् ब्रह्मत्वमात्मनः ॥
पादाङ्गुष्ठयुगे त्वेकं एकङ्गुल्फद्वयोर्द्वयोः ।
जानुनोश्च द्वयोरेकमेकन्तु रेकयोर्द्वयोः ॥
गुह्ये कट्यां तथैकैकं एकैकं जठरे रसेः ।
स्तनद्वये तथैकन्तु न्यसेदेकं गले तथा ॥

वक्त्रे तालुनि हृक् स्तुत्योः स्तुर्थ्येकैकमेव च ।
भ्रुवोर्मध्ये तथैकन्तु ललाटे चैकमेव हि ॥
याम्यप्रथिमसौम्येषु एकैक मेकमूर्द्ध नि ।
गायत्रीन्यस्तसर्वाङ्गो गायत्री विप्र उच्यते ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसि ।
यः प्रोक्तोऽक्षरविन्यासो व्याहृतीनामथोच्यते ॥
सप्तापि व्याहृतीर्न्यस्त्वा भवेद्ब्रह्मो जपादिषु ।
भूर्लोक पादयोर्न्यस्त्वा भुवर्लोकन्तु जानुनोः ॥
स्वर्लोक कटिदेशे तु नाभिदेशे महस्तथा ।
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा ॥
भ्रुवोर्ललाटसन्ध्योश्च सत्यलोकः प्रतिष्ठितः ।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ॥
तच्छुभ्रं ज्योतिषां ज्योति स्तद्यदात्मविदो विदुः ।
देवस्य सवितुर्भर्गो वरणीयञ्च धीमहि ।
तद्ध्याकर्न्धियो यस्तु ब्रह्मत्वे च प्रचोदयात् ॥
छन्दोदैवतपंणश्च विनियोगश्च ब्राह्मणम् ।
मन्त्र मश्चविधं ज्ञात्वा द्विजः कर्म समाचरेत् ॥
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा ॥
हीन न विनियुञ्जीत मन्त्रन्तु मात्रयापि च ।
देवतायतने कुर्य्याज्जपं नद्यादिकेषु च ॥
आगमेषु यतीनाञ्च गोष्ठे वा स्वगृहेऽपि वा ।
चतुर्ष्व मतिपूर्वेषु मौनमाहि क्रमेण तु ॥
दशगुण मरण्यं स्यात् फलं निष्काममन्यकम् ।

असमीपे जलं कुर्य्यात् समङ्क्त तद्वेदयथा ॥
श्रस्ङ्का मासुर यस्मात्तस्माज्जपयेद् ध्रुवम्।
स्फाटिकै द्रौचरुद्राक्षै, पुत्रजीवसमुद्भवै ॥
अक्षमाला प्रकर्त्तव्या प्रशस्ता ह्युत्तरोत्तरा।
अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना ॥
यथा कथञ्चिज्जपयेत्संरुद्धा तद्वेदयथा।
प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम् ॥
अत्योङ्कारसमायुक्ता मन्यन्ते कवयोऽपरे।
प्रणवान्ते तथाचादौ आङ्करन्ये जपे क्रमम् ॥
आदौ चैवतु चोङ्कार आद्यन्तादिकमोऽन्ततः।
तदाद्यञ्च तदन्तञ्च कुर्य्यात्प्रणवसम्पुटम् ॥
आद्यन्तरचितं कुर्य्यात् इति पाराशरोऽब्रवीत्।
अक्षरं प्रतिलोपेन सोङ्कारेण क्रमेणतु।
पुट्कारान्ताञ्च कुर्वीत प्रच्छन्नरिपवे बुधः ॥
होमेऽपि च जपं कुर्य्यात् प्रणवावर्जनं द्विजः।
अभिप्रेतार्थहेमादौ स्वाहान्तमुदीरयेत् ॥
सङ्कीर्णानां यदा पश्येद्रागाद्वा द्विपतोऽपि वा।
तदा जपेच्च गायत्री सर्वदोषापनुत्तये।
रुद्रजाप्यानि कार्य्याणि सूक्तञ्च पुरुषस्य च।
शिवसङ्कल्पजप्यञ्च सर्वं कुर्य्याद्विधानतः ॥
घ्नन्ति जप्तानि पापानि श्रेयोदद्युस्तदर्थिनः।
अतो जपं सदा कुर्य्याद्दिने श्रुभमात्मनः ॥
द्रुपदां वा जपेद्देवीं मजपाञ्चाप्युकान्तया।

प्रणवस्य सदाभ्यस्यैयाति ब्रह्मत्वमिच्छति ॥
प्रणवानामयुक्ताभ्यां तथा षोडशभिः शतैः।
पुमान्मुच्यते घोरात् तमझ्यामजपा विदुः ॥
रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि ।
समर्पितमयावेदं सूर्याख्ये ब्रह्मण. पदे॥
न जप प्रसभ कुर्यात् प्रसभ घ्नन्ति राक्षसा ।
ब्राह्मणा भागधेयन्तु तेषाञ्चैवावधीकृताः ॥
उपांशुन्तु जप कुर्यात् कार्य्यं चैव तु मानसम्।
निवृत्तोष्ठमुपांशु स्यादचलौष्ठ तु मानसम् ॥
द्विविधन्तु जप कुर्यादुपांशु मानसन्तथा ।
उपांशु स्याच्छतगुण सहस्रो मानसः स्मृतः ॥
उपांशुजपयज्ञस्य मानसे च रतस्य च ।
इहैव याति वेधस्त्वमिति पाराशरोऽब्रवीत् ॥
विधियज्ञा पाकयज्ञा ये चान्ये बहवो मखा ।
सर्वे ते जपयज्ञस्य कला नार्हन्ति षोडशीम् ॥
जपेनैकेन सिद्धेन किल सिद्ध भवेदिह।
कुर्य्यादन्यं न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥
शतेन जन्मजनित सहस्रेण पुराकृतम्।
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥
दशभिर्जन्मजनित शतेन तु पुराकृतम् ॥
सहस्रेण त्रिजन्मोत्थ गायत्री हन्ति पातकम ।
अस्मिन् कलियुगे विप्राद्विधिवत्कर्म यत् कृतम् ॥
भवेद्दशगुण तद्धि कृताद्यैर्युगतो ध्रुवम् ।

न च तच्छक्य रे कर्तुं मावाम्नायस्य भूयसात् ॥
अयथार्थकृतात्पाठान्मन्त्रसिद्धिर्गरीयसी ।
नच मन्त्रोपहसनं स्वपाश्व मवलोकयेत् ॥
नान्यसक्तो न तन्नस्थो न चैवार्द्र शिरास्तथा ।
नाडीणां पादमात्रस्य नश्चैवाङ्घि तथाकरौ ॥
नैवम्बिध जपङ्कुर्य्यान्नच सञ्चालयेत्करौ ।
प्रच्छन्नानि च दानानि ज्ञानञ्चानिरहङ्कृतम् ॥
जपानि च सुगुप्तानि तेषा फलमनन्तकम् ।
य एवमभ्यसेन्नित्य ब्राह्मण सयतेन्द्रियः ॥
स ब्रह्मलोक माप्नोति तथा ध्यानार्चनादपि ।
अथान्यत्सम्प्रवक्ष्यामि विशेषन्तु पितामहे ॥
लभ्यवान्वेधस. पृष्टाङ्गायत्रीध्यान मुत्तमम् ।
तदक्षरे तु यद्वर्णा यत्र यत्र च यः स्मरेत् ॥
यत्फल लभते कृत्वा यथा तस्याः समर्चनम् ।
तत्प्रकृतिं स च स्वान्तश्चिकारो बुद्धिरेव च ॥
तुरीयेतदहङ्कारं वयश्च विद्धिपापहम् ।
रे स्वर्गन्तु णिरूप च य.रसञ्चन्धमात्रभम् ॥
गौः श्रोत्रन्त्वक्चक्षुः सकार रसना तथा ।
यौ नासाच तथा वाग्मी हि हस्तौ च द्विपादृहयम् ॥
थ उपस्थ तु दं योन्यो नम प्राकारमाश्रितम् ।
चो तेजोदलजं यच्च्या गायत्र्यास्तत्वचिन्तनम् ॥
चतुर्विंशतितत्वानामत्येकमघरेषु य ।
गायत्री संस्मरेद्योगान् स याति ब्रह्मण. पदम् ॥

लकारं पादयोर्न्यस्य ब्रह्मविष्णुशिवाकृतिम्।
शान्तम्पद्मासनारूढन्ध्यानाद्धरति किल्बिषम्॥
सकारं पादयोर्न्यस्यां अतसीपुष्पसन्निभम्।
पद्ममध्यस्थितं सौम्यल्लङ्गं चोपपातकम्॥
विकारं जङ्घयोर्हासिन्ध्यायेदेतद्विचक्षणः।
ब्रह्महत्याकृतं पापं हन्यात्तद्धि स्मृतः क्षणात्॥
उकारं जानुदेशे तु इन्द्रनीलसमप्रभम।
निर्दहेत् सर्वपापानि ग्रहरोग मुपद्रवम्॥
ऊर्वोर्विमलन्ध्यायेत् शुद्धस्फटिकविद्युतिम्।
विज्ञातं हन्ति तत्पापमगम्यागमन कृतम्॥
रेकारं वृषणे प्रोक्तं विद्युत्स्फुरिततेजसम्।
मित्रद्रोहकृत पाप स्मरणादेव नाशयेत्॥
शिश्नस्थो श्वेतवर्णस्तु जातिपुष्पसमद्युतिम्।
गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात्॥
यद्वृष्या तारका वर्णाश्चन्द्र नधिपण भूषितम्॥
गोहत्याविहित पापं णीकारस्य विशोधयेत्॥
श्याम रक्तश्च देकारन्ध्यानकृद्देशमाश्रयेत्।
हृदि कुन्देन्दुवर्णाभम्वकारं मन्मतं स्ववेत्॥
गुरुहत्याकृत पाप वकारेण प्रणश्यति।
स्यकारं विन्यसेत्कण्ठे तौ च स्फटिक सन्निभम्॥
मनसोपार्जितं पाप स्य कारेण प्रणश्यति।
धिकारं वसुदैवत्यं वदन स्वर्णसन्निभम्॥
प्रतिग्रहकृत पापन्तत्क्षणादेव नश्यति।

मकारं पद्मरागाभं शिरस्थं दीप्ततेजसम् ॥
पूर्वजन्मकृतं पापं मकारेण प्रणश्यति।
छिकारं नासिकाग्रे तु पूर्णचन्द्रसमप्रभम् ॥
पूर्वात्परतरं पापं स्मरणादेव नश्यति।
धीकारं तं माञ्जिरसन्नैक्ययोर्नित्यमेद्बुधः ॥
मनोवाक्कायिकं पापं चिन्तनादेव नश्यति।
योकारं रक्तवर्णाभं मिन्द्रनीलसमप्रभम् ॥
प्राणिहत्याकृतं पापं योकारेण विनश्यति।
द्वितीयं तु तथा प्रोक्तं योकारं स्फटिकसन्निभम् ॥
निर्दहेद्दुष्टपापानि अपेयामेयकानि च।
नकारे सुमुखे पूर्वं मादित्योदयसन्निभम् ॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेदैरवं पदम्।
नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखे ॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेद्वैष्णवं पदम्।
सौम्यङ्गोरोचनापीतं चोकारम्पश्चिमामुखम् ॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः सगच्छेद्ब्रह्मणः पदम्।
शङ्खकुन्देन्दुधवलन्दकारश्चोत्तरामुखम् ॥
सकृज्ज्ञात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्म शाश्वतम्।
यकारस्तु शिरः प्रोक्तश्चतुर्वदनसंयुतम् ॥
याकारं समुखं प्रोक्तश्चतुर्विंशति संस्मृतम्।
यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना ॥
यं यं च भावयेच्चित्ते तत्सर्वं पूतमेव च।
जाप्येत् त्रिपदा ज्ञेया ब्राह्मणैर्नतच्चान्तरे.

जम्बुका नाम सा देवी यज्ञवेदप्रतिष्ठिता ।
अन्तर्जले तिरावर्त्य मुच्यते ब्रह्महत्यया ॥
सा देवी द्रुपदा नाम वेदे वाजसनेयके ।
सोपनीय समस्तानि महतां स द्विजोत्तमः ॥
ब्रह्मणः पदमाप्नोति यस्माच्च न निवर्त्तते ।
प्रमादेन कथञ्चिद्वा जपं कुर्वन् भविष्वपि ॥
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः ।
तद्विष्णोरिति मन्त्रोऽयं स्मर्त्तव्यः सर्वकर्मसु ॥
आवर्त्य प्रणवो वापि सर्वस्यादिर्यतोऽहि सः ।
अभ्यसेत्प्रणवान्नित्य मेकचित्तसमाहितः ॥
गायत्री च तथा देवी वैदिकस्तु जप हियत् ।
पौराणं पाञ्चरात्रञ्च योऽभ्यसेन्मुक्ति माप्नुयात् ॥
य वेद स्थानि वै तानि यान्येतानि च सा स्मृतिः ।
जपेनयेनेहजनेन पुंसो ददाति मार्गं सवितापि कर्तुं ।
अयहि सर्वेष्टकृतात्करिष्ठोविधेः पदं यास्यति निर्विकल्प ।
यदुक्तं धर्मशास्त्रेषु तथा सर्वश्रुतिष्वपि ।
उपनिषत्सु मन्त्रवत् विप्रहित मकीर्त्तितम् ॥
न्यासन्तनुवन्वैच यन्त्रदेहे
जग्राह वोङ्कारमयीसुतीक्ष्णम् ।
विप्रश्च वश्यान्त्रिपदान्न लोके
मतः स दुष्टः कुर्नय्य कुर्यात् ॥
इति श्रीबृहत्पाराशरीये जपनिर्णयः ॥

देवार्चनं प्रवक्ष्यामि यदुक्तं ऋषिभिः पुरा ॥
वैदिकैरेव तन्मन्त्रैर्यस्य एतस्य तैरिति ।
अर्चयेद्वैदिकैर्मन्त्रैर्नानुग्राह्यमुपेक्षते ॥
वैदिकोऽनुग्रहस्तस्य वेदश्चिन्तकराणां तु।
ब्रह्माणं वैधसैर्मन्त्रैः वैष्णु स्वैः शङ्करं स्वकैः ॥
अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः ।
मन्त्रन्यासम्पुरा कृत्वा स्वदेहे देवतासु च ॥
गायत्र्योङ्कारन्यस्ताङ्गः पूजयेद्विष्णुं मन्त्रयम् ।
न्यस्त्वा तु व्याहृतीः कृत्वा प्रोक्तस्थानक्रमेण तु ॥
ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेत् ।
विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापयोगान्व्यनक्ति य ।
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥
यद्ज्ञात्वा मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः ।
पट्स्वेषु हरेस्त्वर्गर्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
अग्नौ क्रियावतां येषां दिवि देवमनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिम् ।
आपो ह्यायतनन्तस्य तस्मात्तासु सदा हरिः ॥
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम्।
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ॥
अर्चितं स्यादिदन्तेन नित्यम्भुवनसप्तकम् ।
अनुष्टुभस्य सूक्तस्य विभक्तस्य च दैवतम्॥

पुरुषो यो जगद्बीज ऋषिर्नारायण स्मृतः।
यस्य सूक्तस्य सर्वस्य ऋचा न्यासं यथाक्रमम्।
देवे चात्मनि च तथाऽस्मृत्वा ध्यायेत परम्।
हस्तन्यासम्पुरा कृत्वा स्मृत्वा विष्णुन्तथाव्ययम्॥
शिखाबन्धन्तु दिग्बन्धं चार्चयेद्विष्णुमात्मनि।
प्रथमां विन्यसेद्वाम द्वितीया दक्षिणे करे॥
तृतीया वामपादे तु चतुर्थी दक्षिणे न्यसेत्।
पञ्चमी वामजानौ तु षष्ठी च दक्षिणे न्यसेत्॥
सप्तमी वामकट्यान्तु दक्षिणायान्तथाष्टमीम्।
नवमी नाभिमध्ये तु दशमीं हृदि विन्यसेत्॥
एकादशी वामबाहौ द्वादशी दक्षिणे न्यसेत्।
कण्ठे त्रयोदशी न्यस्य तथा वक्त्रे चतुर्दशीम्॥
अक्ष्णोः पञ्चदशी न्यस्य षोडशी मूर्ध्नि विन्यसेत्।
एव न्यासविधिं कृत्वा पश्चात् यागं समाचरेत्॥
आसने चिन्तयेन्मेरु मष्टदलं सकर्णिकम्।
व्याहृतीना मथ न्यास कुर्य्यात्तद्विधिवद्द्विजः॥
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनोः।
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा॥
जनोलोकन्तु हृदये कण्ठदेशे तपस्तथा।
भ्रुवोर्ललाटमध्ये तु सत्यलोकः प्रतिष्ठितः॥
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥
आवाहन मथ प्राऊ विष्णोरमिततेजसः।

यदर्चासतये तस्य स्वदेहे चिन्तयेद् यथा ॥
आद्य मावाहयेद् देवञ्चाथ पुरुषोत्तमम् ।
यथादेहे तथा देहे न्यास कृत्वा विधानतः ॥
द्वितीययासनन्दद्यात्पाद्यं तृतीयया ।
चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याचमनन्तथा ॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ।
यज्ञोपवीत चाटम्या नवम्या गन्ध मेव च ॥
पुष्पन्देयं दशम्यात् एकादश्याच धूपकम् ।
द्वादश्या दीपकन्दद्यात् त्रयोदश्या निवेदनम् ॥
चतुर्दश्याञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणम् ।
षोडश्योद्वासन कुर्याच्छेषकर्माणि पूर्ववत् ॥
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनं हरेः ।
षण्मासात्सिद्धिमाप्नोति एवमेवहि योजयेत् ॥
आदित्यमण्डले देवन्ध्यात्वा विष्णुमुपैति यः ।
स याति ब्रह्मणः स्थान नात्र कार्या विचारणा ॥
ध्येयो दिनेश परिमण्डलमध्यवर्त्ती
नारायण सरसिजासनसन्निविष्ट ॥
केयूरवान्मकरकुण्डलवान् किरीटि-
हारी हरि र्मुनिजनैर्धृतशङ्खचक्रः ॥
सूक्तेन विष्णु विधिना समुदीरितेन
योगेन नित्यमजमादिमनन्तमूर्त्तिम् ।
भक्त्यार्चयेत्पठति यश्च स विष्णुदेहम्
विप्रो विमेद्धरिवरेण कृतार्थदेहः ॥

पञ्चरात्रविधानेन स्थण्डिले वापि पूजयेत् ।
जलमध्यगतो वापि पूजयेज्जलमध्यग ॥
द्वादशार्चनव्यूह पञ्चतत्त्वक्रमेण तु ।
अभावे धौतशुक्लस्य पत्रिकायास्तथा द्विज. ॥
जलेऽपि हि जलेनैव मन्त्रैरेवार्चयेद्धरिम् ।
विष्णविष्णुत्यजस्त्वस्तु चिन्तयेद्धरिमेव तु ॥
तिष्ठन्व्रजंस्तथासीन. शयानोऽपि हरिं सदा ।
संस्मरन्नाप्नुयात् पश्येदिहामुत्र च वै द्विज ॥
रुद्र रुद्रविधानेन ब्रह्माणञ्च विधानत ।
सूर्यं संहितमन्त्रैश्च तदीरितविधानत: ॥
दुर्गां कात्यायनीं चैव तथा वाग्देवतामपि ।
स्कन्द विनायकञ्चैव योगिनी क्षेत्रपालकान् ॥
विधानेनार्चयेत्सर्वान्यो विप्रो भक्तितत्पर: ।
विष्णुना सुप्रसन्नेन विष्णुलोकमवाप्नुयात ॥
गवाश्च पूजयेद्विद्वान् ब्राह्मण शक्तितत्पर: ।
आरोग्यपुष्टिसंयुक्तो दीर्घमायुष्यमाप्नुयात् ॥
यदा गावो यदा विप्रा. सद्भि पूज्या: सदा द्विजै. ।
पूजिता पूजयन्त्येते दहन्ति चापमानिता: ॥
यो हित सर्वसत्त्वेषु गोषुपब्राह्मणेषु च ।
इहामुत्र स पूज्योऽसौ विष्णुलोकमवाप्नुयात् ॥
उक्तो वरस्यास्य सुरार्चनस्य
धर्मो विधिर्विष्णुजनस्य सर्वो ।
कार्यो द्विजाति: प्रतियामरं यो

येद्रोक्तमन्त्रैः समये हिताय ॥
देवपूजाविधिः प्रोक्त एष उद्देशतो मया।
वैश्वदेवस्य वक्तव्यो विधिर्विप्र! मयाधुना ॥
इति वृहत्पाराशरीये धर्मशास्त्रे देवपूजाविधिः समाप्तः ॥



वैश्वदेवं प्रवक्ष्यामि यथाकार्यं द्विजातिभिः।
स्वगृह्योक्तविधानेन जुहुयाद्वैश्वदैवकम् ॥
हविष्यस्य द्विजोभावे यथालाभस्तं हविः।
जुहुयाद्विधिवद्भक्त्या यथा स्याच्चित्तनिर्वृतिः ॥
यद्वा तदापि होतव्यमग्नौ किञ्चिद्द्विजातिभिः।
फलस्वा यदिवा मूलं घासस्वा यदिवा पयः ॥
अहुत्वा च द्विजोऽश्नीयाद्यत्किञ्चित् स्वयमश्रुतं।
अश्नीयाच्चेदहुत्वापि नरकं स समाविशेत् ॥
जुहुयादन्नमक्षारलवणमन्नं हुताशने।
अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभः ॥
यदाग्नौ हूयते नैव यस्य ग्रासो न दीयते।
अभोज्य तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत् ॥
लौकिके वैदिके नैव वैश्वदेवो हि नित्यशः।
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥
अभावादग्निहोत्रस्य आवसथ्य वा तथा।
अस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ॥

अग्नि. सोमः समस्तौ तौ विश्वदेवास्तथैव च।
धन्वन्तरी कुहूस्तद्वदनुमातः प्रजापतिः॥
द्यावाभूम्योः स्विष्टिकर्त्तं कृत्वा तेभ्य पुन. पुनः॥
कुर्याद्बलिकृतं पश्चात्सर्वदिक्षु प्रदक्षिणम्।
सूताग्नेस्तस्य पुष्पस्य यमाय च सहानुगैः॥
मरुद्भ्य त्रिपिद्वारि अप्सरोभ्यस्तथा हरेः।
वनस्पतिभ्य सर्वेभ्यो मुसलोलूखले हरेत्॥
श्रियै च भद्रकाल्यै च उपणीपपादयोः क्रमात्।
ब्रह्मणे सानुगायेति मध्ये चैव हरेद्बलिम्॥
वास्तवे सानुगायेति वास्तुमध्ये वलि हरेत्।
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाशमुत्क्षिपेत्॥
द्युचरेभ्यश्च भूतेभ्यो नक्तचारिभ्य एव च।
वास्तुपृष्टे च कुर्वीत वलि सर्वान्न भूतये॥
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्।
पतितेभ्य श्वपाकेभ्यः पापाना पापरोगिणाम्॥
कृमिकीटपतङ्गाना सर्वेभ्योऽपि वलि हरेत्।
एव सर्वाणि भूतानि यो विप्रो नित्यमर्चयेत्॥
ततस्थान परमाप्नोति यज्ज्योति परवेधसः।
गृह्योऽग्नौ वैश्वदेवन्तु प्रोक्तमेतन्मनीषिभिः॥
अनग्निकस्तु कुर्वीत वैश्वदेव कथं लिति।
महाव्याहृतिभिस्तिस्र समस्ताभिस्तथा परा॥
इत्याहुतीश्चतस्रस्तु तथा वेदकृतोऽपि च।
नियमस्तं यजामह इत्यादीनाहुतिद्वयम्॥

वैश्वदेवेन जुहुयाद्विशेषोऽन्यत्र वै पुनः।
अल्पमृत्युनिवृत्त्यर्थमायुःपुष्टिविवृद्धये॥
जुहुयात् त्र्यम्बकं देव बिल्वपत्रैस्तिलैस्तथा।
विनायकाय होतव्या तथा घृतस्य चाहुतिः॥
सर्वविघ्नोपशान्त्यर्थं पूजयेत्तन्ततस्तुतम्।
गणानान्त्विति मन्त्रेण स्वाहाकारान्तपादतः॥
चतस्रो जुहुयात्तस्मै गणेशाय तथाहुती।
तद्विष्णोरिति जुहुयाद्विधिसम्पूर्णताकृते॥
प्रणवेन च गायत्र्या केचिज्जुह्वति-सद्द्विजाः।
एतौ वै सर्वदेवत्यौ एतत्परन्न किञ्चन॥
एताभ्यां जुह्वते नैव सर्वेभ्योऽपि हुतम्भवेत्।
जुहुयात्सर्पिषायुक्तं सव्येन पयसाथ वा॥
क्षीरेण च विकारेण तिलतैलेन वा पुनः।
समोक्ष्य पयसा वापि अन्नं तु अश्नुयादपि॥
अस्नेहाश्चापि गोधूमाः शालयो हवनीयकाः।
हविस्तु हविरभ्युक्तमहविस्तु हविर्यतः॥
अभ्यक्तमिव होतव्यं मृतोरूक्षं विवर्जयेत्।
दरिद्राश्चित्तिताभिके रूक्षान्नहवने विदुः॥
उष्टाग्ने चाग्नेके रूक्षासनमिहोच्यते।
ॐकारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा॥
जुहुयादग्निको विप्रो गृहमेधीहि नित्यशः।
बलिशेषञ्च भूतेभ्यः सर्वेभ्योऽप्यविशेषतः॥
हुत्वाथ कृष्णवर्माणं कृताञ्जलिः प्रसादयेत्।
तपसे। त्वमिरेतेन मन्त्रेण भक्तिमान् द्विजः॥

ओंब्रह्मेति मन्त्रन्तु जपेद्वै सर्वकामिकम् ।
अग्राव्यग्न इति च्चोत मन्त्रञ्च प्रयतो जपेत् ॥
अन्यदौतासन मन्त्र जपित्वा च समापयेत् ।
सर्वशान्तिकरार्थं तथाग्निर्देवनेति च ॥
स्नान धनमरोगित्व गतिमिच्छ स्तथा द्विजः ।
शम्भुमग्नि रविं विष्णु मर्चयेद्ध्रांकतः क्रमात् ॥
अजानन् यो द्विजोनित्य मह्नत्वा निस्तृत हवि ।
पितृदेवमनुष्याणा मृणात्युक्त प्रयात्यधः ॥
शाकञ्चापि तृणं वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्त. सोऽत्रैव सुखमश्नु ते ॥
स्वरेण वर्णेन च यद्विहीन तथैव हीनं क्षपयापि यच्च ।
तथातिरिक्त मम तत् च्चमस्व तदस्तु चाग्नेः परिपूर्णमेतत् ॥
सर्वपापप्रणोदाय सर्वकामाय वै द्विज ।
द्विजन्मना हितार्थाय वैश्वदेव उदाहृतः ॥
इति श्रीबृहत्पाराशरे वैश्वदेवविधिः ॥

---

आतिथ्य संप्रवक्ष्यामि चातुर्वर्ण्य फलप्रदम् ।
चतुर्वर्णातिथि. मोक्ष. कालप्राप्तो बहुश्रु त. ॥
अदृष्टोऽ दृष्टगोत्रादिरज्ञाताचारविद्यकः ।
सन्ध्यामात्रकृताचारसज्ञश्चैः सोऽतिथिरुच्यते ॥
क्षुत्तृष्णाध्वश्रमश्रान्त प्राणत्राणान्नयाचक. ।
गृहिणो वैश्वदेवान्ते त्वग्रद्वारमुपागत. ॥
विष्णुरूपोऽतिथिः सोऽय सत्कारार्थमिहागतः ।
इति मत्वाथ भक्त्या च प्रणयाद्दीर्जनायतम ॥

स्वं शुनेन समायात. सर्वदेवमयो विधि.।
निर्दह्य सर्वपापानि समाचाशु प्रयास्यति ॥
ब्राह्मणै सह भोक्तव्यो भक्त्या प्रक्षाल्य पादयम्।
आसनार्घादिकं दत्त्वा दत्त्वा स्रक्चन्दनादिकम् ॥
योगिनो विविधैर्वेषैर्भ्रमन्ति धरणीतले।
नराणामुपकाराय ते चाज्ञातस्वरूपिणः ॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं द्विजः।
श्राद्धक्रियाफलं हन्ति तत्र वार्यूजितोऽतिथिः ॥
तस्मात्पूर्वमेवात्र पूजयेदागतोऽतिथिः।
यदा चित्कश्चिदागच्छेत्तारयेद्यस्तु पूर्वजान् ॥
यतिर्वा ह्यग्निहोत्री च तथापि सप्तकद्विजः।
सदैतेऽतिथयः प्रोक्ता अपूर्वश्च दिने दिने ॥
अतिथेऽमरदेहस्य मत्तारार्थमिहागतः।
संसारपङ्कलग्नं मा सुदरस्याधनायने ॥
नैक ग्रामे वसन्वीह मुनीगैरच्यते तिथिः।
अन्यत्र दृष्टपूर्वोऽपि नासावतिथिरुच्यते ॥
क्षत्रियो यदि वा गच्छेदतिथिर्मास्य वेश्मनि।
भक्तेषु सत्सु विप्रेषु कामतस्तु तमाशयेत् ॥
वैश्यो वा यदिवा शूद्रो विप्रगृहं समाव्रजेत्।
तो भृत्यैः सह भोक्तव्यो इति पाराशरोऽब्रवीत् ॥
क्लीबो वा यदि वा काण. कुष्ठी वा व्याधितोऽपि वा।
आगतो वैश्वदेवान्ते प्रष्टव्यः सर्वदेवताः ॥
दर्शनेनापि वैश्येन तथा च रूपलेप च।
आतिथ्यं सर्ववर्णानां कर्तव्यं स्यादसंशयम् ॥

योऽतिथीन्पूजयेद्भक्त्या तथाभ्यागमनेन च ।
बालवृद्धादिकश्चैव तस्य विष्णुः प्रसीदति ॥
देवा मनुष्याः पितरश्च सर्वे सूर्येन तृप्तेन च भूरि तिष्ठन्
तस्मात्प्रदातुश्चमराङ्गनाभिस्तस्यातिथिः केन समस्वमस्ति ।
इति श्रीवृहत्पाराशरे ह्यतिथिविधिः समाप्तः ॥

---

वर्णधर्मान् प्रवक्ष्यामि यत्कृतं ब्राह्मणादिभिः ।
निबोधध्व द्विजास्तद्वै सर्वेषां पृथक् पृथक् ॥
यजने याजने विप्रे तथा दान प्रतिग्रहे ।
अध्यापन मध्ययनं कर्माण्येतानि षट् तथा ॥
प्रजाना रक्षणं दान शरीरा निग्रहस्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम ॥
यजनाध्ययने दानं पाशुपाल्यन्तथा कृषी ।
वाणिज्यञ्च कुसीदञ्च कर्मषट्क प्रकीर्त्तितम् ॥
शुश्रूषा ब्राह्मणादीना तेभ्य आजीवनन्तथा ।
एष धर्मः स्मृत शूद्रो वाणिज्येन च जीवनम् ॥
सर्वेषा जीवन प्रोक्त धर्मेणैव च वर्णशः ।
भिन्नवृत्तिर्यथा न स्यात् कुर्य्याद्विप्रस्तथा च तत् ॥
कुर्वन्नुक्तानि कर्माणि वृत्त्या वा क्षत्रियस्य च ।
तदभावे द्विजो जीवेद्विड्वृत्ति विवर्जयेत् ॥
क्षत्रिये प्रजापालत्व शस्त्रभृत्त्वं प्रचण्डता ।
निर्जयेत्परसैन्यानि एष धर्मः स्मृतो नृप ॥
पुष्पपुष्पं विचिनुयान्मूलच्छेद न कारयेत् ।
मालाकार इवारामे प्रजासु स्थाप्तया नृप ॥

लोहकर्मरथानाञ्च गवाञ्च प्रतिपालनम् ।
गोरक्षा कृषिवाणिज्यं वैश्यवृत्तिरुदाहृता ॥
शूद्रस्य द्विजशुश्रूषा परोधर्मः प्रकीर्त्तितः ।
अन्यथा कुरुते यस्तु तद्भवेत्तस्य निष्फलम् ॥
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।
न दूष्येच्छूद्रजातीनां कुर्य्यात् सर्वस्य विक्रियाम् ॥
विक्रय मद्यमांसानां मभक्ष्यस्य च भक्षणम् ।
गमनागमिता चौर्य्यं शूद्रे स्युः पापहेतवः ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां द्वितीयोऽध्याय ॥

---

## तृतीयोऽध्यायः ।

अतः परं गृहस्थस्य कर्माचारं कलौ युगे ।
धर्मसाधारणं शाक्यं चतुर्वर्णक्रमागतम् ॥
युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम् ।
षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत् ॥
हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम् ।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत् ॥
स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्डं विवर्जितम् ।
घस्रार्द्धं सयत्नमाणं मनड्वाहं न वाहयेत् ॥
वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत् ।

कुंगवैर्न क्वापि कुर्य्यात्सर्वथा धेनुसंग्रहः॥
बन्धनं पालनं रक्षा द्विजः कुर्य्याद्गृहगवाम्।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम्॥
न दूरे तासु मोक्तव्या चरणाय कदाचन।
दूरे गावश्चरन्त्यो वै न भवन्ति शुभायनाः॥
प्रातरेवहि दोग्धव्या दुह्याः सायं तथा गृही।
दोग्धुर्विपर्य्ययेणैव यद्यन्ते ताः कदाचन॥
अनादेयहिपास्त्यक्ता स्रवन्त्यनुदिनं पयः।
तुष्टिकृद्देवतादीनां पूज्या गावः कथन्न ताः॥
यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः।
पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः
सर्वे देवमया गौस्तु तुष्येत्तद्भक्तितो हरिः॥
हरति स्पर्शनात्पाप पयसा पोषयन्ति याः।
प्रापयन्ति दिवं दत्ताः पूज्या गावः कथन्न ताः॥
यच्छ्रफाहतभूमेस्तु उद्धताः पांशुसंस्पृशः।
प्रोणयेत् पुरुषस्थेनो वन्द्या गावः कथन्न ताः॥
शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम्।
किमपूज्यं हि तस्या गौरिति पाराशरोऽब्रवीत्॥
गौरवत्सा न दोग्धव्या नचैवं गर्भसन्धिनी।
प्रसूता च दशाहावाग्दोग्धा चेन्नरकं व्रजेत्॥
दुर्बला व्याधिसयुक्ता पुष्पिता या हिवत्सभूः।
सा साधुभिर्न दोग्धव्यायर्षिभिः सुप्तमीष्टुभिः॥

कुलान्ते पूजिता गावः कुलान्ते वहवस्त्रियाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते वन्ध्यावग्रहः॥
एकत्र पृथिवी सर्वा सशैलवनकानना।
तथा गौ र्ज्यायसी साक्षादेकत्रोभ्यत्रोऽसुखी॥
यथोक्तविधिनायैता दत्ताः पाल्यास्तु पूजिता।
पातयेत् पूजयत्रैताः समेमेह च मोदते॥
दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखाः॥
गोहपा वाजिशालाया सुतीक्ष्णं लोहदारुजम्।
स्थाप्य तु सर्वदा तस्यां गवि लुप्तविमोक्षणात्॥
गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्वदा।
ताडयन्ति च ये पापा येचाकर्षन्ति ता नराः॥
नरके पच्यन्तेऽङ्गानि व्याघ्रेणैव प्रपीडिताः।
स पशुचर्म दण्डेन मृदु तासां निवर्त्तयेत्॥
गच्छ गच्छेति ता ब्रूयान्मा भैरिति वारयेत्।
संस्पृशन् गा नमस्कृत्य कुर्य्यात्तास्तु प्रदक्षिणम्॥
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्॥
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः।
पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च॥
गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोडशीम्।
कृतस्नेपाः हि पापानि येषां ग्रहं कलङ्कृतम्॥
सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्।
माघ्रयार्थेव गावश्च कुम्भेक्ष द्विधा शतम्॥

तिष्ठन्त्येकत्र मन्त्राणि हविरेकत्र तिष्ठति ।
गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः ॥
गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदक्रमात् ।
सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः ॥
वसन्ति हृदये नित्यं तास्तु मध्ये वसन्ति ये ।
ते पुण्यपुरुषाः लोके नाकेऽपि दुर्लभाश्च ये ॥
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमूले तु केशवः ।
शृङ्गाग्रे शङ्करं विद्यास्त्रयो देवाः प्रतिष्ठिताः ॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ।
सर्वे देवाः स्थिता देहे सर्वदेवमया हि गौः ॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः ।
कम्बलाश्वतरौ नागौ तत्कर्णे यौ व्यवस्थितौ ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ ।
दन्तेषु वसवश्चाष्टौ जिह्वाया वरुणः स्थितः ॥
सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः ।
ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम् ॥
कालिन्दी गोमये तस्या अपरा देवता तथा ।
अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः ॥
उदरे गार्हपत्योऽग्निर्हृदये दक्षिणस्तथा ।
मुखे चाहवनीयस्तु चावसथ्यौ च कुक्षिषु ॥
एवं यो वर्तते गोषु ताडनक्रोधवर्जितः ।
महतीं श्रियमाप्नोति स्वर्गलोके महीयते ॥
कृत्यं तस्या न लङ्घेत पूतिगन्धं न वर्जयेत् ।
यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्धते ॥

यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्।
शिवस्यायतनं दत्त्वा दत्तं तेन तु विश्वकम्॥
उक्ता गौ वेधसा सृष्टा तस्यं ह्युत्पादनाय च।
तैरुत्पादितशस्येन सर्वमेतद्धि धार्य्यते॥
यश्चैतान् पालयेत् यत्नाम्भुवैर्येश्चैव यत्नतः।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च॥
यावद्गोपालने पुण्य मुक्तं पूर्वमनीषिभिः।
उक्षोऽपि पालने तेषां फलं दशगुणं भवेत्॥
जगदेतद्धृतं सर्वम नडुह्य चराचरम्।
वृष एवावतो रक्षा पालनीयस्तु सर्वदा॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणां क्षितितारिताः।
त्रैलोक्यं धारणायालमन्नानाञ्च प्रसूयते॥
अनादेयानि धासानि विध्वसन्ति सकामतः।
भ्रमिता भूतल दूरमुक्षाणङ्को न पूजयेत्॥
उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च।
आनयन्ति दवीयस्य मुक्षोर्वा कोऽधिको भुवि॥
कन्धेन दूराच्च वहन्तिभारं आचादि किञ्चिदनपत्यरत.।
स्वीयेन जीवेन परस्य जीव रक्षन्ति पुष्णन्ति विवर्धयन्ति॥
पुण्यास्तु गावो वसुधातले मां बिभ्रत्यमुष्णोष्ठगर्भभारम्।
भारः पृथिव्या दशताड़ितायाः एकस्य चाष्णो ह्यपि साधुशाच॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः।
माहेह्यपीयं धरणीं समाना तस्माद्वृषात् पूजितमस्ति चान्य॥
उत्पाद्य शस्यानि छपाश्चरन्ति तदेव भूयः सकलं वहन्ति।
र भारधिन्वा. प्रवदन्ति किञ्चिदशोषपाद्धार्यति जीवलोक.॥

तृतीयेऽङ्घ्रि चतुर्थे वा यदेवोप्ता दृढीभवेत् ।
तदा न सातु भेतव्या नैव प्राग्दुर्बलस्य च ॥
नामतश्चेरनकीलन्तु खादिर वाथ सैंशिपम् ।
द्वादशाङ्गुल कड्काद्यन्तज्ञैस्त्रीणि समेच वा ॥
शाला द्विजेन्द्रा वृषगोऽश्वयाना ता याम्यदिग्द्वारवती विदध्यात्
सौम्या ककुप्द्वारवती सुशोभान्तेषा शमिच्छन् घृतमाल्यनस्य
गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्वे पशवो द्विजेन्द्रा
याम्या मुखा दिङ्मुखमुत्तरा दिङ्मुखपाशका स्ते खल बन्धनीया
शालाप्रवेशे वृषगोपशूना राजापि यत्नाद्धयकुञ्जराणाम् ।
होमश्च सम्यार्चिषि शास्त्रयुक्तं कुर्य्याद्द्विजन्मो द्विजपूजनञ्च ॥
लाङ्गलं यत्प्रवच्यामि यत्काष्ठ यत्प्रमाणत ।
हलीशायास्तथामानं प्रतोदस्य युगस्य च ॥
चत्वारिंशत्तथाचाष्टा वङ्गलानि कुचः स्मृत ।
अथार्द्धमङ्गलैर्भोज्यो हलीशा वेधतश्च य ॥
षोडशैव तु तस्याध षड्विंशति तथोपरि ।
वेधस्तथाच कर्त्तव्य प्रमाणेन षडङ्गुल ॥
अष्टाङ्गुलमुरस्तस्य वेधादूर्द्ध्वं प्रकल्पयेत् ।
ग्रीवा दशाङ्गुला चोर्द्ध्वं हस्तग्राही तत स्मृत ॥
अङ्गुलैश्चाष्टभिस्तन् स्याद्वेध स्यात्प्रतिहारकः ।
तस्याधस्ताद्युत्वारि स वेधश्चतुरङ्गुल ॥
सार्धतश्च शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् ।
पञ्चाङ्गुलमुरस्तस्या शिरश्चेति विभाजनम् ॥
पृष्ठं शिरसोधार्य्य हस्ततन्प्रमाणकम् ।
अङ्गुलानि तथा चाष्टौ लरम प्रथमा स्मृता ॥

वन्धाङ्घ्रिः प्रतीहारी पङ्क्ति मदङ्कुला भवेत्।
सुतीक्ष्णे लोकपालस्य सुक्तादामादिदग्रस्तत्॥
नगर चौरवृक्षस्य न पिल्लपिचुमर्दयोः।
द्रुत्यादीना हि कुर्व्यात् न नन्दति चिर गृही॥
प्राञ्जला समहस्ता तु हलीया विदुषः मता।
तस्य वेधः सवर्णाया कार्य्यो नवविंतस्तिभिः॥
प्रमाणयोर्न तत्कुर्य्यात् कीर्त्तिघ्नौ तौ प्रकीर्त्तितौ।
प्रमाणतस्तु ता कुर्वन् समस्तो नश्यते गृही॥
नीचोच्चत्वप्रमानेन तज्ज्ञास्ता प्रवदन्ति हि।
चतुर्हस्तं युग कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत्॥
शेषम्तृग्धा' कदम्बस्य शालाधन्यतमस्य च।
सस्या वेधार्द्धहि: कार्य्या दशाङ्गुलप्रमाणिका॥
तन्माने च प्रवालीच तदन्तरदशाङ्गुलम्।
प्रतोदविषमयन्थि वेणवश्च चतुः करः॥
तदग्रे तु प्रकर्त्तव्या यवाकारातु लौहवत्॥
हीनातिरिक्तं कर्त्तव्य नैव किञ्चित्प्रमाणतः।
कुर्य्यादनडुहा दैन्यादत्नैन्या नरकं व्रजेत्॥
यथा भीष्टं तथा योभ वाहकस्य प्रमाणत।
भूमेश्च कर्षणायालं तज्ज्ञा सर्ववदन्ति हि॥
योजन तु हलस्याथ प्रवक्ष्यामि यथा तथा।
श्रेष्ठनक्षत्र संयुक्ते पुण्येऽह्नि तद्विधीयते॥
यत्र दिने तु बुध्येत तत्र कार्य्यं द्विजानता॥
यत्र हृत्य हित चापि पुण्य' वा मनसि स्मरेत्।
तत्र विद्वान् द्विजश्रेष्ट पुण्येऽह्नि तद्विधीयते॥

मातृश्राद्धं द्विज कृत्वा यथोक्तविधिना गृही।
द्रव्यकालानुसारेण कुर्वतो धर्मतः कृषिम्॥
प्रोल्लिखन् मण्डलं पुष्पधूपदीपैः समर्चयेत्।
इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च तथा द्विज॥
कुर्य्याद्बलिं कृतिर्विद्वान् उदलाशद्वयाय च।
तथा कुमार्य्यै सीतायै अनुमत्यै तथा बलिम्॥
नमः स्वाहेति मन्त्रेण सबालन्वालनः शुभम्॥
दधिगन्धाक्षतापुष्पैः शमीपत्रैस्तिलैस्तथा।
दद्याद्बलिं हृषाणाञ्च तथाज्यप्राशनं तथा॥
सहृष्य शिरफालाग्रे हेम्ना वा राजतेन वा।
प्रलेप्य मधुसर्पिभ्यां कुर्य्याच्चैव प्रदक्षिणम्॥
अग्न्योश्चाणौ मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम्।
पुष्पं लाङ्गलकल्याण कल्याणाय नमोऽस्त्विति॥
सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत्।
सीता युञ्जत इत्याद्यैर्मन्त्रैःसीरं प्रवाहयेत्।
दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुष्पदैः॥
सीता पूज्य वशी भक्तोऽरक्त वस्त्रविशारदौ।
सप्त धान्यानि चादाय मौल्य पूर्वामुखो हली॥
तानि दक्षोचण चैवं किरन् भूमौ कृषद्विजः।
न यवैर्न तिलैर्हीन द्विज कुर्य्याच्चो कर्षणम्॥
तद्विहीनन्तु कुर्वाण न प्रशंसन्ति देवताः।
तिलमात्रच्युत तोयं दक्षिणस्याम्पतर्द्दिशि॥
तेन तृप्यन्ति पितरो यावन्न तिलविक्रय।
तिलैर्मौर्य्यै ... ॥

विमुच्य पितरस्तन्तु प्रयान्तीव तिलैः सह ।
छयाजल यवस्तम्भपत्रेभ्यो भूतले पतत् ॥
पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवता. ।
देवपर्ज्जन्यभूसीरयोगात् कृषिः प्रजायते ॥
व्यापारात् पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत् ।
शालीन् भूयश्च कार्पासं वार्त्ताकुप्रभृतीनि च ॥
वापयेत्सर्वबीजानि सर्ववापी न सीदति ।
चन्द्रक्षये यतिर्विप्रो यो भुनक्ति हयान् क्वचित् ॥
तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम् ।
चन्द्रक्षये द्विजो विद्वान्यो भुङ्क्ते तु पराशनम् ॥
भोक्तुर्मासार्जितं पुण्यं भवेद्यस्यान्नमस्य तत् ।
चन्द्रार्कयोस्तु संयोगे कुर्याद्य स्त्रीनिषेवणम् ॥
स रेतोभोजिनस्तस्य पञ्चमासं पितरो हिता ।
चन्द्रक्षये च य. कुर्य्यान्नरस्तरुनिकृन्तनम् ॥
तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः ।
वनस्पतिगते सोमे यो॰ पथ्यान्न व्रजेन्नर ॥
प्रभ्रष्टद्विजकर्माणो न त्यजन्त्यमरादय ।
वासांसि दुःप्रणाशाय रजकस्य गृहे क्षिपेत् ॥
पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत् ।
सोमक्षये द्विजो याति तत्कायस्तु कृतीगनस ॥
तदेव पितृशापाग्निदग्धो नरकं माविशेत् ।
अष्टमी कामभोगेन षष्ठी तैलोपभोगिना ।
कुहूश्च दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम् ।

चन्द्रार्कनीताः पुरुषास्तु देवा दद्यादभत्वा यदि दन्तकाष्ठम्।
नराधिराजः सहितस्तु तेन घातः कृतः स्यात्त्रिदशदेवतानाम्॥
तत्राश्वश्च विषाणानि गावश्चैव वृषास्तथा।
चरणाय विमुच्यन्ते आगतानपि भोजयेत्॥
य उत्पादं च शस्यानि सर्वाणि दृढचारिणः।
जगत्सर्वं धृतं यैस्तु पूज्यन्ते किन्न ते वृषा॥
येनैवेम प्रदत्तेन दत्तं गोदशकम्भवेत्।
यद्रूपेण स्थितो धर्मः पूज्यन्ते किन्न ते वृषाः॥
पाल्याश्च यत्नतस्ते वै वाहनीया यथाविधि।
स याति नरकं घोरं यो वाहं यत्यपालयत्॥
नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः।
वाहनीयो हि शूद्रेण वाहयन् नरकमाप्नुयात्॥
वर्जयेद्दुष्टदोषाद्यं गावो वै दोहने नरः।
पाल्या वै यत्नतः सर्वे पालयन् शुभमाप्नुयात्॥
अन्नार्थं मेतानुचाणः ससर्ज परमेश्वरः।
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम्॥
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः।
गृह्णाति चाम्भसा सूर्यो रसानन्नाय रश्मिभिः॥
अन्नं प्राणो बलं चान्नं मदाज्जीवितमुच्यते।
अन्नं सर्वस्य चाधारः सर्वं मन्ने प्रतिष्ठितम्॥
सुरादीनां हि सर्वेषां मन्न बीजं परं स्थितम्।
तस्मादन्नात्परं तत्वं न भूतं न भविष्यति॥
द्यौः पुमान्धरणी नारी ह्यर्णोऽन्नीतिर्न्दिवश्रुतम्।
द्युधातौ तोदसंयोगात्सर्वादीना हि सम्भवः॥

आपोमूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम्।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः॥
सर्वस्य बीजमापो वै सर्वमद्भिः समावृतम्।
अद्य आप्यायना ह्यापः आपो ज्येष्ठतरा स्मृताः॥
किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः।
न जीवन्ति विना तानि तस्मादापोऽमृतं स्मृतम्॥
दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत्।
तथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह॥
अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विज।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्॥
सीरे। सौम्ये। कुमारि। त्वं देवि। देवार्च्चिते। श्रिये।
सत्कृताद्धि यथासिद्धा तथा मे सिद्धिदा भव॥
सकृत् सूनाविना नाम्ना सीतया, स्थापनं विना।
विनाभ्युक्षणचर्यार्थं सर्वं हरति राक्षसः॥
वापने नवने चैव खले गन्धीप्रवाहणे।
एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने॥
देवतायतनोद्यानविपातस्थानगो व्रजन्।
सीमा श्मशानभूमिञ्च वृक्षच्छाया क्षितिं तथा॥
भूमिं निखातयूपाञ्च शयनस्थानमेव च।
अन्यामपि हि चावाह्या न कृषन् कृषिकृत् हराम्॥
गोचरां वाहयेद्भूमिं वर्चोमृकरकरीषताम्।
वाहयन्नाप्रमत्तश्च न नदीपुलिनं तथा।
यद्यसौ वाहयेल्लोभात्तदैवाद्यापि हि मानव।
क्षीयते,सौ चिरात्पापात् सपुत्रपशुबान्धवः॥

ब्रह्मा वै ब्राह्मणानां स्वात्प्रमुखस्सृजदादितः ॥
तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि ।
पशुपाल्यायनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः ॥
द्विजदास्यार्थं पथ्याय पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगती चैव भूगेहाश्च गजादिकम् ॥
स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् ।
तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम् ॥
ग्रामेशस्य नृपस्यापि किञ्चिन्तमप्यसौ बलिम् ।
अथान्यत्सम्प्रवक्ष्यामि कृषिकृच्छुद्धिकारणम् ॥
संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वसत्त्वोपकाराय सर्वत्र कृषिकृन्नरः ॥
कुर्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् ।
सर्वस्य स्थितिकारण्यात्स्व देवपितृभिः पुनः ॥
मनुष्याणान्तु पोष्याय कृषिं कुर्यात् कृषीवलः ।
वयांसि चान्वसत्त्वानि क्षुत्तृष्णापीडितो द्विजः ॥
विमुक्तः सर्वपापेभ्यः स्वर्लोकस्तमवाप्नुयात् ।
चतुर्दिक्षु चले कुर्यात्प्राच्यामतिघनावृतिम् ॥
सैकद्वारापिधानश्च पिदध्याच्चैव सर्वतः ।
परोष्ट्राजीरणात्तत्र विगतन्तु निवारयेत् ॥
शूकरशृगालादिकाकोलूककपोतयान् ।
त्रिसन्ध्यं प्रोक्षणं कुर्यात् शान्तीयामृतवाम्बुभिः ॥
रक्षा च भस्मना कुर्याज्जलधाराभिरक्षणम् ।

निमन्त्र्य मर्चयेत्प्रीता पराशरर्षिं स्मरन् ।
प्रेतभूतादिनामानि न वदेच्च तदग्रतः ॥
सूतिकागृहवच्चात्र कर्त्तव्यं तत्र रक्षणम् ।
हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि ॥
प्रथमादिव पूर्वाह्णे नापराह्णे न सन्ध्ययोः ।
अन्योन्यान सदा कुर्यात्प्रीतापूजनपूर्वकम् ॥
वर्जेत यत्नभिन्नाभिः कलेरोहिण्य एव हि ।
भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् ॥
पललयत्ना पचियैषा ब्रह्मणा निर्मिता पुरा ।
भागधेयमयां सत्वा ता गच्छन्तीह मासिकाम् ॥
शतक्रत्वादयो देवा पितरः सोमपादयः ।
सनकादिमनुष्यांश्च येचान्ये दक्षिणायनः ॥
तदुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथम हली ।
विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च ॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ।
अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः ॥
दीनानामप्यनाथानां कुष्ठीनां कुशरीरिणाम् ।
क्लीवान्धबधिरादीनां सर्वेषामपि दीयते ॥
वर्णानां पतितानाञ्च वृहग्भूतानि तर्पयेत् ।
चाण्डालानाञ्च पाकानां प्रीत्यात्युक्ताविचारदत् ॥
ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः ।
लोकग सीरिभिः सर्वे वर्णिभिर्धर्मवेदिभि ॥
दद्यात्वृतया वाचा क्षमियाय विसर्जयेत् ।
तत्कृत्वा स्वगृहं गच्छेच्छ्राद्धमभ्युदय श्रयेत् ॥

शरद्वसन्तग्रसन्तनवान्नै, श्राद्धमाचरेत् ।
नो कृत्वानत्तदश्नीयादश्नन्तं तद्द्वयमश्नुते ॥
कृषाबुत्पाद्य धान्यानि खलयज्ञं समाप्य च ।
सर्वस्तत्र हि तौ धुक्त इहामुत्र सुखी भवेत् ॥
कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यत ।
न सुख कृषितोऽन्यत्र यदि धर्मेण कर्षति ॥
अवस्वत्वं निरन्नत्वं कृषितो नैव जायते ।
अनातिथ्यञ्च दुस्तत्वं गोम ो न कदाचन ॥
निर्धनत्वमसभ्यत्वं विद्यायुक्तस्य कर्हिचित् ।
अस्वानित्वमभाग्यत्व न सुशीलस्य कर्हिचित् ॥
वदन्ति कवय, केचित् कृष्यादीना विशुद्धये ।
लाभस्यासंप्रदानञ्च सर्वेषां शुद्धिशङ्कवेत् ॥
प्रतिग्रहचतुर्थांशं वर्धिर्ष भ तृतीयकम् ।
कृ।पतो विंशतिश्चैव दद्दो नास्ति पातकम् ॥
राज्ञो दत्त्वा च षड्भाग देवताना च विंशकम् ।
त्रयस्त्रिंशञ्च विप्राणा कृषिकर्मा न लिप्यते ॥

कृष्या च चोत्पाद्य यवादिकानि
धान्यानि भूयांसि मखान्विधाय ।
मुक्तो गृहस्थोऽपि पराशरमाक्
तस्मात्मय यदिदवा दिदोषा ॥

मनुष्या पितरश्च सर्वे साध्याश्च यक्षाश्च सकिन्नराश्च ।
। हिलेन्द्रा सह सर्वदावै दृष्ट्न न तस्मानि मनाक् द्युरेति ॥
दशकोऽष्य कृषि विदध्यात् खिद्येत पापेन स भूभवेम ।
त तस्मान्नि विदा रितादि स्याद्ग धात्री वरदानशाली ॥

षट् कर्माणि तथापि येतु कुर्युर्ज्ञानविधिं द्विजाः।
ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः॥
षट्कर्मभिः क्षपिः प्रोक्ता द्विजानां गृहमेधिनाम्।
गृहस्थ गृहिणीमाश्रित्य द्विवाहमथोच्यते॥
इति श्रीवृद्धहारीते धर्मशास्त्रे सुव्रतप्रणीतायां
दैविकर्मनीतायज्ञोपवर्णनं नाम तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः।

स्वयञ्च वाञ्छेत् चेत् धान्यैश्च स्वयमर्जितैः।
कुर्याद्विवाहयागादिपञ्चयज्ञांश्च नित्यशः॥
अष्टौ विवाहा नारीणां संस्काराय प्रकीर्तिताः।
ब्रह्मादिक क्रमेणैव सम्प्रवक्ष्याम्यतः पृथक्॥
जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च।
कन्यालङ्कृत्य दीयेत विवाहो वैधमः स तु॥
रेतो मज्जति यस्याप्सु मूत्रञ्च ह्रादिकोऽनिलम्।
पुमान् स्यात् लक्षणैरेतै र्विपरीतैश्च षण्डकः॥
ये यज्ञे वर्त्तमाने तु ऋत्विजः कर्म कुर्वते।
कन्यालङ्कृत्य दीयेत विवाहः स तु दैवकः॥
वराय गुणयुक्ताय विदुषे सद्गृहाय च।
कन्या गोद्वयमादाय दीयेतार्षः स उच्यते॥
कन्या चैव वरश्चोभौ इच्छया धर्मचारिणौ।
स्यातामिति च यत्रोक्ता दानं कार्यं विधिस्त्वयम्॥
एतावद्देहि मे द्रव्य मित्युक्त्वा प्राक् प्रदाय च।

यत्र कन्या प्रदीयेत स दैवत्यविधिः स्मृतः ॥
यत्रान्योन्याभिलाषेण उभयोर्वरकन्ययोः ।
तयोस्तयोर्विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥
युद्धे हृत्वा बलात्कन्या यत्रास्त्रिच्यापि हत्यृचा ।
उह्यन्तु स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः ॥
सुप्तां वापि प्रमत्तां वा कन्यां छलेन भुज्यते ।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥
आद्या वाद्यस्य षट् प्रोक्ता धर्माश्चत्वार एव हि ।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च ॥
पञ्चमश्च तथा षष्ठः स्मृतौ चतु चतुर्थयोः ।
द्वितीयस्यापि यत्प्रोक्ता एतयोस्तेन चाष्टमः ॥
वैधस्याद्यनुरूपेण द्वितीयापरयोः स्मृतः ।
सर्वसप्तममेकस्याद्वितीयस्यैव कीर्त्तितः ॥
अन्त्यावत्यधमौ चोक्ता वृद्धाद्यः गवस्तुना ।
द्यायुधस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः ॥
वार्त्तीया प्राकृतोऽधस्तान्वतुराद्यविवाहजैः ।
स्वात्मानं द्विगुणान्वयाद्दश सप्त च यत्र षट् ॥
स्त्रीणामाजन्मगर्भार्थं संशुद्धौ प्रयत्नवान् ।
वरं हि कवयो विद्वान् जात्यादिगुणसंयुतम् ॥
जातिर्विद्यावयः शक्तिरारोग्यं बहुपक्षता ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥
जातिर्विद्या च रूपञ्च कुलशीलं नवं वयः ।
आरोग्यत्वं विशेषेण सुभगे सत्यपि भजयेत् ॥
जातौ रूपञ्च शीलञ्च वयो नवमरोगिता ।

स्वाचरत्वं विशेषेण सलक्षवरमाश्रयेत् ॥
स याति रूप वित्तञ्च तथाशेषयशं दृढम् ।
सन्तोषजनन स्त्रीणां प्रज्ञावानाश्रयेद्वरम् ॥
न जातिं नच विद्याञ्च वित्तं वाभरणं स्त्रियम् ।
किन्तु तत्राऽभिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत् ॥
पिता यत्र सगोत्रत्वं माता यत्र सपिण्डता ।
न च तामुद्वहेत्कन्यां दारकर्मण्यनाहताम् ॥
कन्यायाश्च वरस्यापि रूपोभयो भवेद्धृतिः ।
तथा कन्यां वरो धीमान्वरयेद्वंशशुद्धये ॥
नानामतानि सर्वेषां सतां कन्यां वरं प्रति ।
सन्तानार्थं विशुद्ध्यर्थं जात्यादिषु च नान्यतः ॥
दूरस्थानामविद्यानां मोक्षं धर्मानुयायिनाम् ।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः ॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीं ।
अतिलोम्नीं हीनलोम्नीं मयाचमतिवाग्युताम् ॥
पिता पितामहो भ्राता माता मातामहोऽपि वा ।
कन्यदाः स्युः क्रमेणैते पूर्वाभावे परः परः ॥
अधिकारी यदा न स्यात्तदस्याय नृपस्य सा ।
तद्विराच स्वयङ्कृत्यं कन्यापि वरयेद्वरम् ॥
पिङ्गलां कपिलां कृष्णां दुष्टायुक्ताक्षनिस्वनाम् ।
स्थूलाङ्गजङ्घपादाञ्च सदा चामिदंवादिनीम् ॥
त्वचेन्द्रागनहीनाम्नीं पचिहृद्धर्मनानियाम् ॥
चण्डिमत्याल्पनाम्नीष तथाभीषणनामिकाम् ।
सुजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम् ॥

अरोगिणीं सुशीलाञ्च तथा भ्रातृमतीमपि।
सुलज्जां शुभनासाञ्च पतिप्रीतिकरीमपि॥
श्वश्रूश्वशुरगुर्वादिशुश्रूषाकारिणीं प्रियाम्।
अव्यङ्गकुलसञ्जाता मनभिज्ञस्ववशजाम्॥
प्रस्वेदसुभगां धाता शुभमिच्छन् समुद्वहेत्।
द्विजः स्वामपरेद्धेतु राजा स्वामपरे तथा॥
वैश्यः स्वाश्च चतुर्थीञ्च क्रमेणैव समुद्वहेत्।
पितृभिः सप्तमीमेके मातृतः पञ्चमीमपि॥
उद्वहेदितिमन्यन्ते कुलधर्मसमाश्रिता।
उक्तलक्षणकन्याया कृत्वा पाणिग्रहं द्विजः॥
धर्मोद्वाहनकेनापि तदा दद्याद्धुताशनम्।
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजः॥
यदा वापि भवेद्भक्तिः सम्पत्तिर्वा तदा भवेत्।
ऋतावृतौ स्त्रियङ्गच्छेत् स्त्रीच्छया चवर स्मरन्॥
सर्वन्तदिच्छया कुर्यादुभयोभयोर्भवेद्रतिः।
भोज्यालङ्कारवासोभिः पूज्याः स्युः सर्वदा स्त्रियः॥
यथा किञ्चिन्न शोचन्ति नित्यं कार्य्यन्तथा नृभिः।
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्युर्नृणां सदा॥
नश्यन्ते ते तदा प्रीतौ तासां शापात्संशयः।
स्त्रियश्चैव पूज्यन्ते सर्वदा भूषणादिभिः॥
देवाः पितृमनुष्याश्च मोदन्ते तत्र वेश्मनि।
स्त्रियस्तुष्टाः स्त्रियः साक्षाद्रुष्टाश्च दुष्टदेवता॥
वर्धयन्ति कुलन्तुष्टाः नाशयन्त्यपमानिताः।
नापमान्याः स्त्रियः सद्भिः पतिश्वशुरदेवरैः॥

भ्राता पिता च माता च तथा बन्धुभिरेव च।
स्त्री यस्य पुरुषस्यापि यतोभयो भवेद्गतिः॥
तत्र धर्मार्थकामाः स्युः स्त्र्यधीना यतस्त्वमी।
षट् कर्माणि नृणान्तेषां येषां भार्या पतिव्रता।
पतिलोकन्तु ता यान्ति तपसा तेन योगवित्॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणी।
पतिमुद्धृत्य याति द्यां काकीव पतिता रुजाम्॥
जीवन्वापि मृतोवापि पतिरेव प्रभुः स्त्रियाम्।
नान्यत्र देवता तासां तमेव प्रभुमर्चयेत्॥
अन्यस्य पि हि दुष्टा स्त्री यान्यभावा प्रियम्पतिम्।
सा गच्छेन्नरकं घोरन्तद्रोहाद्दयुतेऽपि च॥
नियोज्य गृहकृत्येषु सर्वदा ता नृभिः स्त्रियः।
गृहार्थासक्तचित्तास्तास्तदेवार्हन्ति शोचितुम्॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः।
लज्जा चतुर्गुणा तासां साहारश्च तदर्द्धकः॥
न वित्तं नैव जातिश्च नापिरूपमपेक्षते।
किन्तु ताभिः पुमानेष इति रत्वेव भुज्यते॥
विकुर्वाणाः स्त्रियो भर्त्तुरायुष्यधननाशकाः।
अनायासेन वा स्वस्य यथाशक्त्या भवन्ति हि॥
नारीणाञ्च नदीनाञ्च न गतिर्ज्ञायते बुधैः।
कूलं कूलं प्रयायिन्योः कालक्षेपो न जायते॥
चेष्टाचरित्रचित्राणि देवानैव विदुः स्त्रियाम्।
किं पुनः प्राणिमात्रास्तु सर्वथा नष्टबुद्धयः॥

[ ११ ]

तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा।
श्वशुरैर्देवराद्यैस्ताः पितृभ्रात्रादिभिस्तथा॥
विवाहात् प्राक् पिता रक्षेत्ततः पतिस्तु यौवने।
रक्षेयुर्वार्द्धके पुत्राः नास्ति स्त्रीणां स्वतन्त्रता॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः।
न स्वातन्त्र्यं मतस्तासां प्रजापतिरकल्पयत्॥
अशौचाश्च सशौचाश्च अमेध्या अपि पावनाः।
दुर्वाचोऽपि सुवाचस्ता स्तस्मादन्वेषयेत्ततः॥
शौचं वार्च च मेध्यत्व सोमगन्धर्वपावकाः।
ददुस्तासां वरानेतां स्तस्मान्मेध्यतराः स्त्रियः॥
भर्त्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः॥
रक्षणीयास्तत स्तास्तु सर्वभावेन योषितः॥
ममाङ्गस्थैक्य मित्याद्यैर्देवन्यस्ता नृणां तनौ।
अर्धकाया नृणां तास्ता पृथक् धर्मादिना स्त्रियम्॥
नदीं वापीं स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्।
अभिगच्छेद्वविद्वान् यस्तदा भूः क्षयमेति चे।
नदीं वापीं स्त्रियं गच्छेद्दिच्छ स्तदिच्छयापि च॥
न पर्वसु न सन्ध्यासु नाद्यार्त्तु चतुरादिषु।
वन्ध्याष्टमेऽधिवेत्तव्या नवमे च मृतप्रजा॥
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी।
न वक्त्रेऽभिगमं कुर्य्यात्प्राणी गृहीतयोषितः।
कुर्य्याच्चेत्पितरस्तस्य पतन्ति रेतसोभुजः॥
भार्य्याधीनं सुखं पुंसां भार्य्याधीनं गृहं वनम्।

भार्याधीना सुखोत्पत्ति भार्याधीन शुभोदयः ॥
यत्र भार्या गृहं तत्र भार्याधीनं गृह वनम् ।
न गृहेण गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
गृहीस्याद् गृहधर्मेण स वै पञ्चनखादिकाः ।
तद्धीनो न गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
श्रौतो वा यदिवा स्मार्त्तः सर्वेषां गृहमेधिनाम् ।
कण्डन्युदककुम्भोच चुल्ली पेषण्युपस्करम् ॥
पञ्चयज्ञविधानेन कुर्यात्पञ्च सदामखान् ॥
पञ्चसूना वहन्त्यत्र सूनादोषो न विद्यते ॥
यदादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः ।
अध्यापयेद्द्विजान् शिष्यान् स वै ब्रह्ममखः स्मृतः ॥
यः स्नात्वाऽहरहः कुर्या देवांश्च मनुजान् पितॄन् ।
तर्पयेद्भक्त्या पितृयज्ञः स वै मखः ॥
श्रौतेवा यदिवा स्मार्त्ते यज्जुहोति हुताशने ।
विधिवद्भिः स वै विप्रः स तु देवमखः स्मृतः ॥
दशस्वाशासु यः कुर्याद्द्तशेषो बलिं द्विजः ॥
इन्द्रादिभ्यस्तथान्येभ्यः स वै भूतमखो मतः ।
समागतातिथि भक्त्या यद्भोजयति नित्यशः ॥
अन्यानभ्यागतांश्चैव समानीयेष्टि रुच्यते ।
एवं पञ्चमखं स्यान्मुमुक्षाभ्युपायकम् ॥
स सन्तर्प्य पितॄन् देवान् मनुजान् स्वर्गमाप्नुयात् ।
गृहस्थायौषधिं मत्वा त्वाच धेनु चतु सतीम् ॥
स्वर्गौकसः पितॄन् देवान् पुण्यातिथिवरानपि ।

स्वर्गौकोभिः मित्रस्यस्तु पुज्यास्तेऽतिथयो द्विजैः॥
चत्वारस्तु सुता एते यजुर्वेद उदाहृतः।
स्वाहाकारो वषट्कारो हन्तकार स्तथा स्वधा॥
दैवानि भागधेयो द्वौ अन्यत्र मनुजा स्तथा।
पितृणाञ्च चतुर्थस्तु इतिविदनिदर्शनम्॥
इति निवृत्य विधिवत्सम्यक्न कर्म नैत्यिकम्॥
म.णाग्निहोत्रविधिना भुञ्जीतान्नि मघापहम्।
ग्रदत्त्वा पोष्यवर्गस्य ह्यलत्वाऽध्यापनादिकम्॥
असाचिकञ्च योऽश्नीयात्सोऽश्नीयात्किल्विषं द्विजः।
मांसुखादिकमेणाशु दिव्यायुः कीर्तिकीर्त्तितम्॥
दिव्याग्निस्थानमथाद्यादूयत्तेदश्नन्ति राक्षसाः॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः।॥
वक्ष्यमाणो विधिः पुन्यः पावनः प्रेत्य चेह च।
यो विधि दैवतान्यस्त सर्सारबन्धनाशकृत्॥
तद्विदस्तु दिवं यान्ति सुक्ता देवान् चरणेन च।
उद्धरेद्यदि सप्ताशु पुरुषानेकविंशति॥
सर्वेष्टिफलभाक् यायाद्धेषस चय संचयम्।
यः कालाकालविद्विप्रो नैन.स्वर्गी स कर्हिचित्।
सोऽसूष्टो नाविशेत्तत्र यद्गत्वा नैव सस्तौ।
दशपञ्चाङ्गुलव्याप्तं नासिकाया बहि स्थितम्॥
जीवो यत्र विघुंद्योत सा कला षोडशी स्मृता।
सर्वमेतत्तया व्याप्तं त्रैलोक्य सचराचरम्॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता।

न वेद वेदमित्याहुर्वेदन्नाम परम्पदम् ॥
तत्सद् विदित येन स विप्रो वेदपारग ।
आकृतिः सा परा ज्ञेया सा च शान्तिः प्रकीर्तिता।
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥
तज्जाप्य तञ्च वै ज्ञेय तद्वृत्त तदुपासितम् ।
ता कला यो विजानाति स कल्पज्ञो द्विज स्मृत. ॥
यत्तुरीय पद प्रोक्त यस्मिन् लीन मिद जगत् ।
तत् ज्ञात्वा परमं तत्त्वं न भूय पुरुषो भवेत् ॥
प्राणमार्गास्त्रय. प्रोक्तास्तिस्रो नाड्यः प्रकीर्तिताः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
इडा च वैष्णवी नाडी ब्रह्माणी पिङ्गला स्मृता ।
सुषुम्ना चेश्वरी नाडी त्रिधा प्राणवधा स्मृता ॥
उत्तर दक्षिण ज्ञेय दक्षिणोत्तरसंज्ञितम् ।
मध्येतु विषुव ज्ञेय पुटद्वयविनि.सृतम् ॥
संक्रान्तौ विषुवश्चैव यो विजानाति विप्रकम् ।
नित्यमुक्तः स योगी च ब्रह्मादिभिरुच्यते ॥
मध्याह्ने चार्धरात्रे च प्रभातेऽस्तनये तथा ।
विषुवन्त विजानीयात्पुटद्वयविनि.सृतम् ॥
हृत्पुण्डरीकमरणौ मनोमथनमेव च ।
प्राणारण्या न्यसेदग्नि तालाधस्तु प्रतिष्ठित ॥
ज्वालयेत्पूरकेणाग्निं स्थापयेत्कुम्भकेन तु ।
रेचकेणोर्ध्ववह्निना ततो होमं करोति यः ॥
यत्तद्धृदि स्थित पद्ममधोनालं व्यवस्थितम् ।

तदै विकासते पद्मं प्रणवन्तञ्च सर्पति ॥
वामहस्तधृते पात्रे दक्षिणे चाम्भसि स्थिते।
तेनाङ्गुष्ठेत्रिम आच्छन्नाग्रन्तु पूरयेत्।
पूरयेत् पूरकं प्राज्ञ निश्चलं कुम्भकं भवेत्।
विनिःसृत्य शनैर्वायू रेचकान्त विनिर्दिशेत् ॥
स्वांशान्तैः प्रणवाद्यैश्च स्वस्वनाम्ना च वायुभिः।
जितात्मा यो पितं पञ्च, पञ्चाङ्गत्याङ्गति भवेत् ॥
जिह्वादत्तं ग्रसेदन्नं दन्तैश्चैव न तत् सृशेत्।
दशनैः स्पृष्टमात्रेण पुनराचम्य चारभेत् ॥
मुखे माहवनीयोऽग्निर्गार्हपत्य स्तथोत्तरे।
हृदये दक्षिणाग्निश्च सभ्याग्निश्चापि दक्षिणे ॥
सभ्यश्चोत्तरतश्चान्य इत्यग्निस्मरणाक्रम।
प्राणाद्येव हि होत्रादि चिन्तयेत्तद्देव तु ॥
होतार प्राणमित्याहुरुद्गातारसमानकम्।
ब्राह्मणं व्यानमित्येके उदानाध्वर्युमित्यपि ॥
समानश्चेह यव्वान मिति ऋत्विक् क्रमं बुधः।
अहङ्कारं पशु कृत्वा प्राणञ्च पशुमित्यपि ॥
वर्हिः प्रत्यरणिः पृथ्वी लोमानि च कुशाः स्मृता।
मनोविभक्ता त्वग्जिह्वा इति तास्ते प्रचक्षते ॥
कृत्वा तु मांदमोङ्कारं ऊङ्कारञ्च तथा पुनः।
उत्तिष्ठञ्जनतायै च हरिश्माश्रितपिङ्गलः ॥
मुख परिधये तुभ्य मुहङ्कि दैवतञ्च यत्।
विजिह्वो यो जाठराग्नेः स्वाहा प्राणाय वात्यय: ॥

इन्द्रगोपककर्णाय जिजिह्वायाग्निदैवतम्।
ॐ स्वाहा अपानाय स्वाहाकारान्त मुच्चरेत्॥
गोक्षीरसमवर्णाय पर्जन्यवह्निदैवतम्।
स्वाहोदानाय सोङ्कार मन्त्राय परार्चिषे॥
तडित्समानवर्णाय वाय्वाग्निर्दैवतायते॥
ॐ स्वाहाच समानाय ॐ स्वाहा चाह वेधसे।
तर्जनीमध्यमाङ्गुष्ठै र्लग्नप्राणस्य चाहुतिः॥
मध्यमानामिकाङ्गुष्ठै र्व्यानस्य परिकीर्तिता।
कनिष्ठानामिकाङ्गुष्ठै रपानायाहुतिः स्मृता॥
मध्यमानामिकास्वन्या मुदाने जुहुयाद्बुधः।
समाने सर्वहस्तस्य आहुतिः स्यात्समानता॥
जल पीत्वा तु तृप्यन्ति देवयज्ञ शनैः शनैः।
ततोऽन्यद्द्रव्यमश्नीयात् पूरणायोदरस्य च॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते।
अपानेन तु भुञ्जन्ते तेषां तुष्यमपानवत्॥
यो ज्ञात्वा तु विधिं भुङ्क्ते यथोक्तमिदमाचरेत्।
इहामुत्र च पूज्यत्व ब्रह्मभूयाय कल्पते॥
त्रिसप्तकुलमुद्धृत्य दातुरप्यचयं भवेत्।
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत् फलम्॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ।
यो जानाति विधिं चेमं स भवेद्ब्रह्मवित्तमः॥
एकं पिबति गण्डूष यच्चोदर्ह धरातले।
पीतेन पितृतृप्तिस्तु भूमौ च भूमिदेवता॥

पिबेद्द्वि .ीय गण्डूषं ब्राह्मणो ज्ञानदुर्बलः।
स हतः पितृदैवत्य मात्मानं नरकं व्रजेत् ॥
रहस्य सर्वशास्त्रेषु सर्वशास्त्रेषु दुर्बलम्।
ज्ञानाना मुत्तमं ज्ञानं न कस्यचित्प्रकाशयेत् ॥
ज्ञानानि च प्रकाश्यानि पुं सामविदुषां वदेत्।
स प्राणस्य फलं तेषा मात्मानं नरके नयेत् ॥
अश्नीयाद्विधिवन्नृपपातः क्षतपरीहृतः।
पूजितान्नमवाग्जुष्टः स पैशाच समाचिकम्।
वाग्यतन्नृपपानोऽपि त्रियासान पि वा द्विजः॥
तस्य त्रिरात्रपुण्यस्तु दानेऽपि कवयोविदुः।
चतुस्त्रिकोणाऽन्ता च विप्रचत्रविशा क्रमात्॥
वदन्ति परिक्रम्यन्ति तद्धीनान्नतु राक्षसम्।
गण्डूषीयात्प्रागपोशान तथा भुक्ता सगण्डूष ॥
अनग्न मश्नत तत् स्यात् भक्तमर्त्र द्विजन्मना।
काले भुक्ता समुत्थाय प्रोष्य विम समीक्ष्य च ॥
अह पतिन्नाच स्थित्वा चिन्तयेद्यज्ञकृत्यकाम्।
भार्या भोजनवेलाया भिक्षां सप्ताय पञ्च वा॥
दत्त्वा शेषं समश्नीयात्सापत्यभृत्यकैः सह।
निहत्य मापि सकलं किञ्चित् स्थित्वा सुखेन च॥
स्वस्वीयकृत्यकार्य्येषु सापि सा त्वपरा पुनः।
उपास्य पश्चिमां सन्ध्यां कृत्वा वैश्वानरमर्चनम्॥
किञ्चित्पश्चात्समश्नीयात्स्नाय प्रातरिति श्रुतिः।
स्वाध्याय मभ्यसेत्किञ्चित् यामद्वयगर्तीति च॥

शयानो मध्यमौ यामौ ब्रह्मभूयाय कल्पते ।
सुशयने शयीनाद्ये एकान्ते च स्त्रिया सह ॥
सेवनं मैथुनादीना वदन्ति मुनिपुङ्गवा ।
ऋतुत्रयात् सुपुत्रार्थी आधानविधिना द्विज ॥
प्रसह्य भस्मना योनि छिंतिन्त्येति दर्शनात ।
कृत्वाधानविधानन्तु स्त्रीयोग मभ्यसेत् पुन ॥
मन्येदविकृतौ योनौ विकारादिकृता प्रजा ।
ब्रह्ममुहूर्त्तमुत्थाय प्रात सन्ध्या सुपक्रमेत ।
आसूर्योदयनात्प्रात सायञ्चै वर्चदर्शनात् ॥
अनृत मद्यगन्धञ्च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्न सन्ध्या वहिरुपासिता ॥
सिन्दुरारुणाभ भाति यौवन यौवतारति ।
उदयेऽस्तमये भानो तावसन्ध्येति शक्तिज ॥
आधानतो द्वितीयेतु मासे पुंसवने भवेत् ।
सीमन्तोन्नयन षष्ठे कार्य्यं मासेऽष्टमेऽपि वा ॥
जातस्य जातकर्मादि विधिवच्छाद्धपूर्वकम् ।
दिने चैकादशनामकर्मादिवद्द्विजन्मनाम् ॥
तुर्यनिष्क्रमणं मासे षष्ठेऽन्नप्राशन तथा ।
चूडाकर्म द्वितीयेऽब्दे कार्य वा कुलधर्मत ॥
सर्व स्त्रिया विमन्त्र तु कार्य कार्यविमुक्तये ।
न स्त्रियस्य द्विजा घेता स्त्रियार्थे च कथञ्चन ॥
स व्रात्य स परित्याज्यो द्विजो यस्माद्द्विजन्मनाम् ।
मुञ्जमौर्वीगुणानान्तु विहिता रशना स्मृता ॥

कार्पासशणमेषोर्णान्युपवीतानि निर्वृतिः ।
पालाशखदिरपीलूनां दण्डास्ते क्रमशः स्मृताः ॥
कार्ष्णं च रौरवं वास्तं मौञ्जनानि द्विजन्मनाम् ।
शिरोललाटनासान्त क्रमाद्दण्डाः प्रकीर्तिताः ॥
अव्रणाः सत्वचो दंष्ट्रा लेताः शुभकरा नृणाम् ।
गायत्र्या त्रिष्टुभा जगत्या तयाणां सुमनोपनयनम् ॥
गायत्र्यामिव शेषो वा युञ्ज्यादित्यपरेषु च ।
सवितुः पादः सवितुर्विश्वाकूपाणि चक्रमात् ॥
औपासनादिका मन्त्रा विप्रादीनां सुदाहृताः ।
ब्रह्मणो विप्रगेहेषु नृपसोमूत्तमेषु च ॥
वैश्यो विप्रो नृपः सेवं कुर्याद्भिक्षां स्ववृत्तये ।
एकान्नश्च द्विजोऽश्नीयाद्ब्रह्मचारी व्रते स्थितः ॥
भिक्षाव्रतं द्विजातीनां उपवाससमं स्मृतम् ।
प्रतिग्रहो न भिक्षा स्यान्न तस्याः परपाकता ॥
सोमपानसमा भिक्षा अतोऽश्नीत स भिक्षया ।
भिक्षया यस्तु भुञ्जीत निराहारः स उच्यते ॥
भिक्षामन्नाभिशस्तेषु सागारेषु द्विजेषु च ।
भिक्षेत भिक्षां क्रमशो गुरोः कुलं विवर्जयेत् ॥
स्वसारं मातरञ्चापि मातृस्वसारमेव च ।
भिक्षेत प्रथमां भिक्षां याचेत न विमानयेत् ॥
भवति । भिक्षां मे देहि भिक्षां भवति । देहि मे ।
भिक्षां मे देहि भवति । क्रमेणैवमुदाहरेत् ॥
द्वादशाब्दं व्रतं धार्यं षट् त्र्यब्दं तु श्रुतिं प्रति ।
आदित्याब्दे सृजेत्तद्दे दत्त्वा तु गुरवे वरम् ॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः।
विद्यां समाप्य स स्नायाद्विद्यास्नातक उच्यते ॥
समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते।
द्वयं समाप्य यः स्नायात्स विनामाभिधीयते ॥
षट्कद्वादशवर्षाणि सगर्भाणि द्विजन्मनाम् ॥
मुख्यकालो व्रतस्यैव ह्यन्य उक्तो विपर्यये ॥
द्विगुणाब्देषु कर्त्तव्या क्रमादुपनतिर्द्विजे।
हीनगायत्रीच व्रात्या उक्तकालादनन्तरम् ॥
नाध्येयो नैव चोद्वाह्योऽव्यवहारविवर्जितः।
न योन्यौनार्चकार्येषु प्रयोज्यास्तु इति श्रुतिः॥
क्लीवन्निलोमवक्त्रा ये निर्लोमदेहवत्तसः।
उदरस्थानपत्याश्च अदृश्यास्ते विगर्हिताः॥
येऽजस्त्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम्।
दीर्घायुष्ट्वं प्रजावत्त्वमरोगित्वं यथोदितम् ॥
क्षीणायुष्यं दरिद्रत्वं मप्रजत्वं मरोगिताम्।
गर्हितत्वं च लोकेऽत्र विदुर्निषिद्धकारिणः ॥
प्रातर्वा यदिवा सायं मद्यादन्नमनर्चितम् ॥
नानाज्यस्यानपोशानं शुभप्रेप्सु द्विजन्मनाम्।
आपोशानं विना नाद्यान्नाद्यादन्नमनर्चितम्।
अनाज्यं न दिवा सायं शुभमिच्छन् समश्नुते ॥
षोड़शाब्दानि विप्रस्य द्वाविंशति नृपस्य च।
चतुर्विंशतिरन्यस्य व्रात्यास्ते सुरतः परम्॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः।
न व्यवहार्यायाज्याश्च इति धर्मविदो विदुः ॥

स्त्रीणामुद्वाह एको वै वेदोक्तपावनो विधिः ।
स्त्रीपुंसोरेव विन्यासः सुन्वोरन्योन्यमुच्यते ॥
स्वस्मिंस्तस्मादिभर्त्येषा पतिर्बिभर्ति सोऽपि ताः ।
अतो भार्या च भर्ता चेत्यत्र वेदो निदर्शनम् ॥
पतिर्विशति यज्जाया गर्भो भूत्वेह मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
जातोऽस्मात्तेन जाया वै यदस्यां जायते पुनः ।
इयमाभवनं भार्या बीजमस्यां निषिच्यते ॥
देवा ऋषुर्मनुष्याश्च भार्या तु जननी तु यः ।
आत्मना जायते ह्यात्मा सेरावत्यतितारिणीम् ॥
भार्या जाया जनन्येषा इति वेदप्रतिष्ठितः ।
यस्मात्पुन्नातिपुन्नाम्नो नरकात् पुत्र उच्यते ॥
सर्वा सत्तृप्तिमाहृत्यं तद्व्रतं ह्यृणैकताम् ।
ये पिता जातपुत्रस्य पश्येज्जीवतो मुखम् ॥
सर्वं मे सफलं मिाम मैत्रिकामुत्रकश्च यत् ।
किं दण्डै रजिनैस्तीर्थैः तपोभिः किं समाधिभिः ॥
पुमांसः पुत्रमिच्छध्वं स वै लोके वदावदः ।
यान्त्वमुष्मिन् शरणं हि वासो रूपं हिरण्यं पशवो विवाहः ।
सा च यत्ना रूपयाच पुत्री ज्योतिःपरम्पुत्र इहाप्यमुत्र ॥
स पुण्यकृत्तमो लोके यस्य पुत्रश्चिरायुषः ।
विशेषेण द्विधर्मज्ञः स परं ब्रह्म विन्दति ॥
पुत्रेण प्राप्यते स्वर्गो जातमात्रेण तु ध्रुवम् ।
तस्मादिच्छन्ति सर्वेऽपि पशवोऽपि वयांसि च ॥
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।

पुत्रस्यापि न पुत्रत्वं य स्त्राति नरकार्णवात् ।
य. पिता स तु पुत्रस्तु जायेवहि जनन्यपि ॥
न पृथक्त्व विदुस्तज्ज्ञा ग्रनयोः पर्योरपि ।
ग्रय हि यस्या पुत्रस्य तस्य पुत्रं भवेत्कुलजन्मोह यस्य ।
तद्दीक्ष चोर्ध्वं पशवो वर्यांसि पुत्रार्थिनो मातरमारुहन्ति ॥
जनियमाणा इच्छन्ति पितर स्वकुले सुतान् ॥
कश्चिद्गत्वा गयायां नोऽवश्य पिण्डान् प्रदास्यति ।
यक्षत्यन्योऽश्वमेधेन नील मोक्ष्यति गोगृहे ॥
इष्टव्य पितृभि सर्वपुत्रेभ्य सकलं फलम् ।
शुद्धशौर्यकचित्तो वा प्राणान्मोक्ष्यति गोगृहे ॥
दानदो वा कुरुक्षेत्रे स्नानो वाथ भविष्यति ।
पुच्छे शिरसि य. शुक्ल शुक्लपा लोहित वपु ॥
देवाद्यभीष्टो नीले यः कृष्णः पावनो हय ।
रक्तो वा यदि वा शुक्लो मृषिणारा शुभेक्षणः ॥
यो न हीनातिरिक्ताङ्ग स्व वा हय समुत्सृजेत् ।
दुहितापि तथा साध्वी श्वशुरयो कृपालिका ॥
पतिव्रता च धर्मज्ञा ग्रपि दुर्गतिकुङ्कवेत ।
य पिता स च वै पुत्र स्तत्समा दुहितापि च ॥
पुत्रश्च दुहिता चोभौ पितु सन्तानकारकौ ।
तत्सुतः पावयेह्यान् लोके मातामहादिकान् ॥
दौहित्र पुत्रवत् स्वर्ग उक्तौ शास्त्रैश्च तौ समौ ।
ग्राधानादिकसस्कारा. प्रोक्ताश्चैव द्विजन्मन. ॥
कर्त्तव्याश्च स्वशाखोक्ता केचित् कुलक्रमेण च ।

चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मन्त्रदीक्षा च विविधा तथैवान्त्येष्टिकर्म च ।
कुलाचारोऽपि कर्त्तव्य इति शास्त्रविदो विदुः ॥
देशाचारस्तथा धर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
लोकभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्ययः ।
तस्मादाचारतो धर्मः स्यादधर्मो विपर्ययात् ॥
आचारवन्तो मनुजा लभन्ते आयुश्चवित्तं च सुतांश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोकं अत्रापि विद्वज्जनपूजिताश्च ।
वेदाः सहाङ्गैः सपुराणविद्याशास्त्राणि वेद्यानिच तद्विहीनम् ॥
कुर्युर्नवैतानि च संस्कृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान् ॥
वेदास्त्यजेयु र्निधनस्य काले नीडं शकुन्ता इव जातपक्षाः ।
आचारहीननरदेहगताश्च वेदाः
शोचन्ति किन्तु क्षतवन्त इतिस्म चित्ते ॥
यं नो भवेद्वपुषि चास्य शुभप्रहीणो
स्नानस्तदत भतयस्वननाशकर्त्ता ।
कर्त्तव्यं शतशः शौचं शौचमूलं द्विजातयः ।
शौचाचारविहीनाना सर्वाः स्यु र्निष्फलाः क्रियाः ।
तत्तद्धि द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ।
विण्मूत्रशोधनं वाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपायनं च स्यात् शौचमाङ्गमनीषिणः ॥
मृद्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः।
भावशुद्धिपरं शौचं माङ्गराभ्यन्तरं बुधाः ॥
यस्य पुंसस्तु यच्छौचं शौचैस्तस्य किमन्यकैः।
वाङ्मनोजलशौचानि यस्य सदा द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतो यः स स्वर्गो नात्र संशयः॥
स्त्रिय रिरंसुर्द्रविणं जिहीर्षुर्वधङ्चिकीर्षुर्मनुजः परस्य।
विवक्षुरत्यन्तमवाच्यवाचं कथं स शुद्धिं समुपैति शौचात् ॥
किं निकामस्य नारीभिः किं गतास्तीर्थं सम्भूद्विजैः।
यतेन्द्रियस्य किं शौचं निष्फलं। मूर्खदानवत् ॥
न गतिर्मूर्खदानेन न तारोऽम्बुनि चाश्मनः।
तस्मात्तस्य न दातव्यं सह दात्रा स मज्जति ॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत्।
होतव्यश्च समिद्धाग्नौ जुहुयात्को नु भस्मनि॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा।
शूद्रेण सह सर्वेषु मूर्खे दानं विवर्जयेत् ॥
ग्रहीता च तावद्विद्वान् तद्दाता रोहको यथा।
आत्मानं तारयेत्तश्च नदीं वैतरणीं द्विजः ॥
यो मूर्खो विप्रदाचारः षट्कर्माभिरतः सदा।
स नयन् स्वर्गमात्मानं ह्यदाश्चैव न पीड़येत् ॥
न विद्यते तयोर्यस्य यददच्च प्रतिग्रहम्।
अददानः स दानारमात्मानं मप्यधो नयन् ॥
हेम भूमिं तिलान् गाश्च अविद्वान् हि ददाति यः

भस्मीभवति सोऽज्ञाय दातु स्यान्निष्फलं भवेत् ॥
तस्माद्ददाति नो दद्यादल्पयोऽपि प्रतिग्रहम् ।
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्यमर्चितम् ।
विद्वद्भिर्नत्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
गर्हिप्राशान्न गृह्णीयु गृह्णन्त स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मार्गगां द्विमुखीं गजम् ।
नवश्राद्धान्नभुक्तश्च वर्ज्यो निर्माल्यवद्द्विजाः ॥
एते यान्यस्मतामिस्र यावत्सनुसहस्रकम् ।
विशोध्य वह्नेश्च रवेश्च जाता
पृथ्वीव येशश्च मुनिश्च गोश्च ।
कालेच पात्रे विधिना प्रदत्तं
प्राप्नोति लोको नियमेन तद्धनम् ॥
वेदाविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दानेच हिनस्त्यासप्तमं कुलम् ॥
अन्यत्रापि निराचारा प्रतिवासिनिवासिनः ।
अन्यत्र हव्यकव्याभ्यां भोज्यास्ते ब्रह्मवादिषु ॥
एकातिग्रहाभावे प्राप्ताया बृहदापदि ।

विप्रोऽस्मिन् प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक्॥
गुर्वादियोग्यवर्गार्थं दैवाद्यर्थञ्च सर्वत ।
गृह्णीयात् द्विजाग्र्यान् भृत्यर्थमात्मनोऽपि च॥
दधिक्षीराज्यमांसानि गन्धपुष्पाण्युपस्थितकान् ।
शय्यासनाशन शाक प्रैष्यञ्च धं नहि क्वचित्॥
अपि दुष्कृतकर्मभ्य: समादद्यादयाचिता ।
पतितादिसदन्येभ्य प्रतिग्राह्यमसंशयम्॥
शक्त प्रतिगृहीतुं यो वेदशास्त्रसु सहृतंम् ।
लभ्यमान न गृह्णाति स्वर्गस्तस्य सुनिश्चित:॥
प्रतिग्रहस्थो वापि याचित यो न यच्छति ।
तत्कोटिगुणग्रस्तोऽसौ स्वतो दासत्वमृच्छति॥
दाता च य खरेद्दान प्रतिग्राही न पात्यते ।
उभौ तौ नरक यातो दाता चैव प्रतिग्रही॥
अपात्रस्य हि यद्दत्त दान स्वल्पमपि द्विज ।
गृहीता तत्तत्पापाद्याति भस्मत्वञ्चाप्यवारित॥
वदन्ति काश्य केचिद्दानप्रतिग्रहौ प्रति ।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रत: ।
दातृहस्तो भवेदूर्ध्व मधस्तिष्ठेत्प्रतिग्रही ।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचित॥
सूतादीनाञ्चतुर्वर्णा तथा निन्दितभूयते ।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यध॥
पुष्टो दयगुण पूर्वात् सुनिश्चयमताधिगत ।
वैश्यो निषिद्धदपतिप्रतिग्राही पदे क्रमात्॥

परपाक ह्ययामास देवानामपिदूषितम् ।
अनुपाकरुतं चैव तथा मांसञ्च मादिकम् ॥
न भोक्तव्यमभोज्यान्न कन्दमूलादिकञ्च यत् ।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्ह्तिम् ॥
सद्युक्त सदा ब्रूयाच्छक्त्यैर्धर्म समाचरेत् ।
यस्मात् स नियमान् कुर्यात्ताईश्यं व्रतमाचरेत् ॥
मातृपितृउपाध्यायान् गुरून्विमान् सदार्चयेत् ।
एतान् श्रेष्ठान् तथाचान्यान्नित्यं विप्रोऽभिवादयेत् ॥
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा ।
दयाञ्च सर्वदा कुर्य्यात्तद्विना नरकाश्रय ॥
दाम्यन् स सर्वदात्मानं दाम्ययन्तु सदा द्विजः ।
दयध्वमिति वै वेदा । श्रुतिर्वाजसनेयिकी ॥
यत्त्रिधा कारकं कुर्य्यात् स्तनयित्नुध्वनिर्दिवि ।
ददेदेति दम दानं दयामिति च शिक्षयेत् ॥
रसारसैः समा ग्राह्या देया अपि च नान्यथा ।
न रसैर्लवणा ग्राह्या समतो हीनतोऽपि वा ॥
तिला अपि समा देया यस्मात् अपिच नान्यथा ।

न सवदेच्च पित्राद्यैः पतितात्रैर्न सविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ।
मतिं शूद्रस्य यो दद्याद्येन पर्युपासते ॥
न किञ्चित्तस्य चादेयं व्रतादिनियमादिकम् ।
आचक्षणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्न निषिद्धस्थं स्वप्याद्वा नार्द्रराङ्घ्रिषु ।
वेदविद्यावितानानि विक्रीणीत न कर्हिचित् ॥
नापाल्यानि रमाद्यानि भूतक्लिशान्यथोऽपि च ।
नापश्येत्तु स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका नच पालाशा न हस्तादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यञ्च कदाचिद्वै गवादिषु ।
पश्चात् स्पृष्टो गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वत्सतन्त्र्यादि वाय्वग्न्यो र्नान्तरा गतिः ।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डौ नो प्राच्यौ विष्णुतार्क्ष्ययोः ।
सौरभेयोर्जलाग्न्योश्च माहेयीजलयोरपि ॥
मानुष्योमादिकानान्तु न कुर्यादन्तरागतिम् ।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्री रजोयुक्ता न च तया सहाश्नुयात् ।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धकंकुम्भुव. ।
नापगाद्वेयचर्यादि नचविष्ठा गृहान्तिके ॥
इतिकालातियानि च शुभमिच्छन्विसर्जयेत् ।

यश्चेन्द्रचापभद्राद्या मूलनाम्ना न निर्दिशेत्।
इन्द्रचापं ध्यायन्ति ये न खातव्याः परस्य ते।
वर्जयेद्दादनश्चैव पादयोः कांस्यभोजने॥
पैशुन्यं मर्मभेदञ्च न वदेन्म्लेच्छभाषितम्।
प्राकृत वक्रगल्लाणि पर्पण्डहेतुकानि च॥
न करं मस्तके दद्यान्मस्तके न करं तथा।
न जातु नो शिरोधार्य्यं न प्राप्तग्शिरा भ्रमेत्॥
वैनाश्च बन्धश्च कदर्यचौराः क्लीबाभिशस्तागणिकासु जातु।
यो वृद्धजीवी गणदीक्षका ये तेषां न भोज्य ह्यशनं द्विजातेः॥
कुरातुरा वृद्धचिकित्सकाश्च या पुंश्चली यौ च विरुद्धवत्।
वात्याशसत्ता श्ववनो जितार्थ अग्राह्यमेषामशन द्विजस्य॥
ये टाम्भिका येच सुवर्णकारा उच्छिष्टभोजी पतितश्च यश्च।
ये पुत्रभार्यो बहुयाचका ये विप्रस्य नेकेऽपि न भोज्यमन्नम्॥
यः सोमशस्यं सुरुतास्युचक्र क्षौराज्यमास लवणाजिनानि।
क्षोमाज्यलाचाश्च तिलान् फलानि एषां न विक्रीत कदन्नमाद्यम्॥
जीवन्ति नित्याम्भरसान्नयाना कर्मांच कार्येऽपि च तन्तुवायाः।
राजा नृशंसो रजकः कृतघ्नो भोज्यन्न तेनैव च छिमकाश्च॥
ये चैलधाराश्च सुराकृता ये शूल्यं न धार्चोस्त्यहृतं वदाय।
ये वन्दिनो येऽपिच याचकाश्च विप्रस्य चैनेऽपि न भोज्यमस्याः॥

मध्वाशनमधूच्छिष्ट दधिक्षीररसोदकः।
मनुष्यः फलपूर्णाश्च कुशवत् पुष्पवीरुधः॥
कौशेयकेशकृतपा नीरं विष रसस्तथा।
शाके कुशकपित्थःक गन्धर्नापधिमूलकाः॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तथोपपत्तिवेश्मनः॥
यो वडस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्दानद्रव्यस्य स्यान्मृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जालापत्यादिकस्य च।
अन्यस्यापि निषिद्धस्य सोऽनन्तं नरकं व्रजेत्॥
पाणिगृहीतभार्याया सत्यां यस्तु नराधमः।
शूद्रीहस्तेन यो भुङ्क्ते पतितः स सदैव तु॥
त्यक्ता ये नोढभार्यान्तु त्यक्तः स पितृदैवतैः।
दैवादित्यक्तः पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु गृहमेधिनी।
वर्जितः पितृदैवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायां स्वयं जातो ह्यस्यां सोऽपि ततपुनः।
अन्यस्याञ्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् विंशति स्विकवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरर्त्वोश्च प्रोष्ठपद्या परस्य च।
पञ्चपरपक्षेषु कार्य्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रोष्ठपद्या द्विजाग्निस्थो ह्यष्टका इति केचन॥
दर्शञ्च पौर्णमासञ्च तथैवाग्रहायणद्वयम्।
चतुर्मासीव्रतान्येव कार्याणि साग्निकैर्द्विजैः॥
अनूचानः क्रतु कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्तांश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः श्रोतृकास्ते प्रकीर्त्तिताः ॥
सङ्क्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्चदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षेत नैतत् कर्त्तव्य कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्ध यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा गृध्रः काकोवाथ प्रजायते ॥
शिलोञ्छवृत्तिर्विप्रस्य तथा चैकाहिकाशनः ।
त्र्याहिकाशनो वा स्यात् कुम्भीकुशलधान्यकः ॥
पूर्वं पूर्वतरः श्रेयानेषां सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्नं तत्पूर्वस्तत्समागमः ॥
सोमेष्टिं पशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तुर्वै तदसम्भवेत् ॥
सत्यामर्थस्य सम्पत्तौ न कुर्य्याद्दीनदक्षिणाम् ।
तत्कृतश्च भवेदर्थं प्राप्नुयात्पशुयोनिताम् ॥
अशापूतश्च दातव्य माले दान समर्पितम् ।
याचितेऽपि हि दातव्य पूत स्वश्रद्धया धनम् ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव च ।
तद्योनावभिजायेत सप्तमेतद्विदुर्बुधाः ॥
आमशूद्रस्यादशूद्रान्नो मृतश्चैवोपजायते ।
द्वादशं दश वार्ते च गृध्रशूकरपुष्कलः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः ।
जुहन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥
तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्द्विजातयः ।
श्मशानमेव तच्छूद्रस्तस्मात्तं परिवर्जयेत् ॥
कणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्षितः ।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यते ॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः ।
द्विजभक्तिर्वणिग्वृत्तिः सच्छूद्रः संप्रकीर्तितः ॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं वाप्युदक्यया ।
श्वस्पृष्टं शकुनोत्सृष्टं प्रयत्नेन विवर्जयेत् ॥
उच्छिष्टञ्च पदा स्पृष्टं शुक्तञ्च पतितेक्षितम् ।
पर्युषितञ्च विट्कस्य केशकीटाद्युपाहितम् ।
पत्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत् ॥
नाश्नीरन्नेतदशन सामिषन्ते द्विजातय ।
शूद्राणामपि भोज्यान्नाः स्युर्दासनापितादय. ॥
सस्नेहमशनभोज्यं चिरस्थमपि यद्भवेत् ।
अनुक्ता अपि भोज्याः स्युः सद्यश्वेता यवादयः ॥
*गर्भिण्या वत्ससुमयामवादे वर्जयेत्पयः ।*
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम् ॥
प्रसूता ब्राह्मणी गौश्च महिष्याजा तथैव च ।
दशरात्रेण शुद्ध्येत भूमिष्ठं च नवञ्जलम् ॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत् ।
मासकीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
एवं येऽकव्यमश्नन्ति तथा विष्ठाभुजश्च ये ।
शुकाटिट्टिभदात्यूहान् कपोतपिकसारिकाः ॥
सेधाद्यान् पञ्च षट् पूर्वं सिंहाद्यान्मत्स्यकांश्च षट् ।
धर्मशास्त्रोदितानद्यात् सर्वाकारांश्च वर्जयेत् ॥
भक्ष्यमांसं त्यजेन्मांसं श्राद्धयज्ञोत्सवेष्वपि ।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिनामिषम् ॥
यदैवाप्यथसम्पत्तिस्तदैवामन्त्रयेद्द्विजान् ।
कृत्वा च विधिवत् श्राद्धं पश्चात् तत् स्वयमश्नुयात् ॥
नाद्यादविधिना मांसं ह्यनुदिष्टेऽपि धर्मवित् ।
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः ।
गृहस्थोऽपि हि यो नाद्यात्पिशितन्तु कदाचन ॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ।
न स्वयञ्च पशुं हन्याच्छाकादिकं उपस्थिते ॥
क्रव्याद्यैः सारमेयाद्यैर्हतं मृगादिमाहरेत् ।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥
समर्थो यस्य यत्तु स्यादन्नं दत्त्वा तु देहिनाम् ।
सन्नामिति निरातङ्को लोमहृष्ट निगद्यते ।
अन्नादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च ॥
महाफलानि हर्त्ता स्यात् प्रवृत्तिः स्वर्गसाधना ।
एकोऽष्टशतमश्वेन यजेत पशुना द्विज ।
अन्योन्यं मासमश्नाति स्वर्गप्राप्तिस्तयोः समा ॥

हेम राजन् ! ग्रहणस्य तामस्य वैणवस्य च ।
चर्मणोरज्जुवस्त्राणां शुद्धिर्जायेत वारिणा ॥
तदादियज्ञपात्राणां धान्यानां वाससामपि ।
अन्येषां जयरूपाणां प्रोक्षणाच्छुद्धिरिष्यते ॥
मार्जनान्यज्ञपात्राणां हस्तेन यज्ञकर्मणि ।
सम्भोगे यत्र कैश्चणैः शुद्धता कोषिकाविषे ॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च ॥
कारुमयानि पुनः पाकैः क्षौमाणि सितसर्षपैः ।
शुद्ध त कारुहस्तस्य पण्य यत् स्यात्प्रसारितम् ॥
भैक्षञ्च मयोषाच्छुद्धात् विहि साचान्नयस्य तु ।
स्त्रीमुखञ्च सदा शुद्धं भूमिर्लेपविवर्जिता ।
अपरा दहनाद्यैश्च गृहं मार्जनलेपनैः ॥
द्रवद्रव्याणि शुध्यन्ति वह्निना प्लावनेन च ।
क्रव्यादाद्यात् हृत मासं सर्वदा शुचि कीर्तितम् ॥
तृणिकात् सौरभेयाय स्वभावात् सह्य दा गतिः ।
वदन्ति सूरयो वारि पवित्रमिति सर्वदा ।।
गौर्वह्निश्च तनच्छाया जलमश्वो वसुन्धरा ।
विप्रुषो मक्षिकानाद्य न दुष्यन्ति कदाचन ॥
स्तुति प्रस्थापने वत्सः अजाश्वौ मुखतस्तथा ।
न तु गौर्मुखतो मेध्या न कस्य मुखजा मलाः ॥
सोमभास्करयो र्भाभि पथशुद्धिः प्रकीर्तिता ।
ओष्ठाधरौ श्मश्रुकरौ मस्नेहौ भोजनादनु ॥
न दुष्येत्तरुजः प्राह बालवृद्धो स्त्रियोर्मुखम् ।

गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
पद्मादमलोहफलकाष्ठ चर्ममाण्डस्य तोयैः ॥
स्वयमेव शौचात् पुंसां निशास्वध्वनि निःसहायम् ।
न स्त्रीणाञ्च सदा शुद्धिर्विहिता च सतामपि ॥
नभसः पञ्चदश्यां तु पञ्चम्यां च तथापरे ।
नभसस्य चतुर्दश्या सुपाकर्म यथोदितम् ॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु ।
हस्तेन वाथ पञ्चम्या मध्यायानां वदन्ति तत् ॥
यत्र शाखोपवीतः स्याद्ब्रह्मचारी द्विजोत्तमः ।
तच्छाखा विहितं तस्य उपाकर्मादि कीर्त्तने ॥
अतो वेदाधिकारत्व वेदपाठस्य कीर्त्तने ।
अनुपाकृतविप्राद्यैर्वेदाध्ययन दुष्कृतम् ॥
मुञ्जोपवीताजिन दण्डकाष्ठम्
त्याज्यं न तत्माद्व्रतचारिणा मपि ।
अक्लिष्टमेकोच्चलोपपापम्
सस्कारमन्यं न पुनर्नयेसु ॥
ओषधीनां तु रङ्गावे स्वशाखाविहितन्तु रत् ।
रोहिण्या च सहस्यस्य उपाकर्माणि कुर्वते ॥
न भवेदनुपाकर्म ब्राह्मणः स्नातको व्रती ।
कर्मच्युतो भवेद्व्रात्यो व्रात्यानिष्कृतिकः शुचिः ॥
तथा ततस्त्वादनध्यायो ह्यतगुर्वादिषु त्र्यहम् ।
मिलकादिष्वघोराल मधीत्यारण्यकः शुचिः ॥

अष्टकासु तथाष्टम्यां पौर्णमास्यां शशिक्षये ।
मन्वादौ युगपद्यादौ विन्दुपातात् चयेऽपि च ॥
चतुर्मासि द्वितीयायां चतुर्दश्यामहर्निशम् ।
अहोरात्रं नृपे संस्थे व्रतिनि श्रोत्रिये यतौ ।
अत त्र्यहमनध्याय मिच्छन्ति चापरे त्र्यहम् ॥
अशौचसूतकाल्तं च यावच्छुद्धिस्तयोर्भवेत् ।
देशान्तरगते प्रेते ग्नुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वाशिष्ठजोऽब्रवीत् ।
प्रतिग्रहे त्वहोरात्रं भुक्त्वा आद्धकमेव च ॥
तद्ज्ञा ब्रूयुरनध्याय मनुसन्ध्या वहर्निशम् ।
यथादौ च रहो भोक्ता रहोरात्रं विदुर्बुधाः ।
अकाले वा हते हृष्टिवज्रिद्रा येच सम्भमाः ।
सामेषु दुःखितानाश्च खरादीनाश्च निःस्वने ॥
पतितश्वावशूद्रान्त्यसन्निधाने न कीर्त्तयेत् ।
आत्मन्येव शुचौ देशे विद्युत्स्तनितरोहिते ॥
वधे च कलहे देशविप्लवे लोकविग्रहे ।
पांशुवर्षेऽम्बुमध्ये च दिग्दाहग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान् सन्ध्ययोरुभयोरपि ।
धावंश्च न पठेद्विद्वान् पूतिगन्धेतयैव च ।
विशिष्टेचागते गेहे गावाद्दक्निर्गमे तथा ॥
भोजनायोपविष्टस्य त्थितस्याद्रपाणिनः ।
वान्ते चान्ते तथा जीर्णे महापातेऽतिमारुते ॥
राजा द्वयो च यानादौ आरूढस्य तथा द्विजः ।
एतानन्याश्च तत्कालान् अनाध्यायान्विदुर्बुधाः ॥

यो वर्जयेदनध्यायान्वेदाध्ययनकृद्द्विज. ।
भवन्ति तस्य सफला वेदाः प्रोक्तफलप्रदाः ॥
येच तेषु पठन्त्यदा. पाठलोभेन लोभिताः ।
न शास्त्रताःभवेद्विद्या निष्फला च तथा द्विजः ॥
य पठेद्विधिवद्वेदान् तद्व्रतीन्द्रियसंयमी ।
ब्रह्मत्वमिह लोकेऽपि ऐश्वर्यसुखभाक् भवेत् ॥
जनान्तर शृण्वतां यस्तु मार्गे गच्छन् पठेद्द्विजः ।
निष्फलास्तस्य वेदाश्च वेदवि वदोषभाक् ॥
य. पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ।
सङ्कीर्णग्राममध्ये तु स भवेत् वेदविक्रयी ॥
ये स्वाध्यायानधीयीरन् चा ध्यायेषु लोभतः ।
वज्ररूपिण ते रुन्वा लोपा देहे व्यवस्थिता. ॥
नाक्रामेदमरादीनां च्छाया तथा परस्त्रियः ।
वान्तष्ठीवनविण्मूत्र कार्पासास्थिकपालिकाम् ॥
तानश्येयाः स्पृश विप्रादरगान् सृशेय द्विजा. ।
श्रियं कामं च सा काङ्क्षन्स्पृशेन् मर्म कस्यचित् ॥
नित्यं वर्त्तेत चाजस्र धर्मंश्च नित्यमर्जयेत् ॥
न किञ्चित्ताडयेद्धीमान् सुत शिष्यञ्च ताडयेत् ।
ताडयेन्नाभितोऽधस्तात्स्थानन्यत्र ताडयेत् ॥
आचारेण सदा विद्वान् वर्त्तते यो यतेन्द्रियः ।
स ब्रह्म परमाप्नोति चारणोऽमुत्र चेह च ॥
आचारमूलं श्रुतिशास्त्रतत्त्व आचारनाशात्र तदुक्तकृत्यम् ।
आचारपर्णानि हि वाग्निशीगोत् आचारमुख्यानि यशोधनानि॥
आचारवृक्षस्य फल वि नाकमाध्याम सुस्वादुरसश्च मुक्ति. ।

तस्मादनन्त फलदन्तु तत्त्वमाचारमेवाश्रय यत्नपूर्वम् ॥
ये धर्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाग्न्योरपि तेच सर्वे ।
यत्नेन कार्या पितृदेवभक्तैः श्राद्धानि कार्याण्यथ तानि वक्ष्ये ॥
यत्नेन धर्मो गृहमेधिविप्रै प्रीतेन वाचा वपुषा च कार्यः ।
आयु प्रजा श्री र्भुवि पूजितत्वं तस्माल्लभन्ते दिवि देवभोगान् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां धर्म-संहितायां चतुर्थोऽध्याय ।

---

## पञ्चमोऽध्यायः ।

श्राद्धञ्चन्द्रावचन्द्रे मच्छायायिं ग्रहणसङ्क्रमे ।
व्यतीपातविषुवत् कृष्णपक्षपातार्थलब्धिषु ॥
अष्टका नयने द्वे च श्राद्ध प्रति यदा रुचिः ।
पुण्यः श्राद्धस्य कालोऽयमपि परिकीर्तितः ॥
युगादिषु च कर्त्तव्य मन्वन्तरादिकेऽपि च ।
श्राद्धकालोऽप्ययं प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः ॥
नवान्नं नवोदकञ्चैव नवच्छन्न तथागृहम् ।
नाव्येव्य वेषु चेदन्ते पितरो हि यमालय ॥
काणः पौनर्भवो रोगी पिशुनो वृद्धिजीवकः ।
कृतघ्नो मत्सरी क्रूरो मित्रभुक् कुनखोऽशुदः ॥
श्वित्रिप्रजनकक्लिष्टोऽश्यावदन्तावकीर्णिनः ।
हीनाङ्गश्चातिरिक्ताङ्गो विक्रावी परनिन्दकः ॥
क्लीवोऽभिशस्तवाक् दुष्टस्तनाध्यापकस्तथा ।
कन्यादूषी वणिग्वृत्तिर्विनग्नः सोमविक्रयी ॥

भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः ।
पित्रादित्यागकृत्तेन वृषली पतितस्तु ॥
अनुकृत्तिरमन्यात: परिपूर्वापतिस्तथा ।
अजापालो माहिषिक: कर्मदुष्टाश्च निन्दिता: ॥
योऽसत्प्रतिग्रहग्राही हि नित्य प्रतिग्रही ।
मृतसूतकदूतौच पितृश्राद्धेषु वर्जिता. ॥
एकादशाहे भुञ्जन्त शूद्रान्नरसमयुता: ।
गुरुतल्पगी ब्रह्मघ्नो दस्य चोपपति र्गृहे ॥
प्रेतस्पृक् चैवनिर्नैक्ता चोपयाचकयाचकौ ।
बककाकविडालाश्च शूद्रभक्तिश्च गर्हित. ॥
वाक्दुष्टश्चौलदमको नित्यमप्रियवाक्कया ।
आसक्तो द्यूतकामादावर्तिवाक् चैव दूषित: ॥
निराचाराश्च ये विप्रा पितृमातृविवर्जिता. ।
विद्वासोऽपि हि नाभ्यर्च्या: पितृश्राद्धेषु सत्तमै: ॥
न वेदै. केवलैर्वापि तपसा केवलेन च ।
सद्वृत्तै: किन्तु ते प्रोक्ता: पावता ब्राह्मणाश्च च ॥
यत्र वेद।स्तपो यत्रग्यत्र वृत्त द्विजाग्रजे ।
पितृश्राद्धेषु तं यत्नान्विद्वान्विप्रं समर्चयेत् ॥
वेदशास्त्रार्थविच्छान्त शुचिर्धर्ममना. सदा ।
गायत्री ब्रह्मचिन्तारत् पितृश्राद्धे स पावन: ॥
रथन्तरं बृहज्ज्येष्ठ. सामवित् त्रिसुपर्णक: ।
त्रिमधुश्चापि यो विप्र: पितृश्राद्धेषु पूजित: ॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुल: ।
मातृस्वस्रेयश्च तथा तथा मातुलजोऽपि या ॥

जामाता श्वशुरो बन्धुर्भार्याभ्राताच तत्सुतः।
सुहृत्ताश्च सदाचारा ये ते श्राद्धेषु पावनाः॥
ऋत्विग्गुरुरुपाध्याय आचार्यः श्रोत्रियोऽपरः।
एते श्राद्धेषु वै पूज्याः ज्ञातिसम्बन्धिबान्धवाः॥
अग्निहोत्री च यो विप्रः आवसथ्याग्निकोऽपि च।
पितृमातृपरावेतौ भोक्तार्यौ हव्यकव्ययोः॥
क्षव्येकवृत्तिजीवी यो भोक्ता मातादिकेषु च।
षट्कर्मनिरतः पूज्यो हव्यकव्ये सदैव हि॥
स्ववृत्ति सदाचारो मातादिभक्तितत्परः।
शुचिः षट्कर्मयुक्तश्च हव्यकव्येषु पूजितः॥
युगानुरूपतो यस्तु विद्याचारादिसंयुतः।
स पूज्योऽन्भियस्तः स षट्कर्मनिरतो द्विजः॥
इत्युक्तगुणसम्पन्नान् ब्राह्मणान् पूर्ववासरे।
निमन्त्रयेत सद्भक्त्या नियोगस्थानपूर्वकम्॥
सव्येन देवतार्थन्तु पित्रार्थमपसव्यवान्।
ततस्तैश्चरितव्यं स्यादुक्तं पितृव्रतद्विजैः॥
जितेन्द्रियैस्तु भाव्यं स्यात्क्रोधगर्वमतन्द्रितैः।
तस्मिन्नहनि वा प्रातर्यच श्राद्धमवस्थितम्॥
निमन्त्रयेत तान् भक्त्या तैश्च भाव्यं जितेन्द्रियैः।
विप्रोरूपाश्वैहस्वाः पितृमातामहादयः॥
भुञ्जन्ति भरुतः श्राद्धे तथा विश्वेऽखिलेऽपि च।
निमन्त्रेत द्विज श्राद्धे न गच्छेत स्त्रिया सह॥
अध्वानं न च वै यायान्न ब्रूयादनृतन्तथा।
नाधीयीत दिवास्वापं न कुर्वीत न सञ्चरेत्॥

न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकम् ।
प्राङ्मुखौ दैविकौ विप्रौ पित्र्यास्त्वथ उदङ्मुखाः ॥
एकैको वा भवत् स्या दैसम्पत्ताविति क्रमः ।
पात्र वा दैविकं कृत्वा विप्र एकस्तु पैतृके ॥
इति वा निर्वपेत् श्राद्धं निर्धनश्चान्यदाचरेत् ।
गत्वारण्यमनामुष्य ऊर्द्ध्वबाहुर्विरौत्यदः ॥
निरन्नो निर्धनो देवाः पितरो ब्राह्मणाश्च रु ।

न मेऽस्ति वित्तं न गृहं न भार्या
श्राद्धं कथं वः पितरः । करोमि ।
वनं प्रविश्येह कृतं मयोच्चै-
र्भुजाहते वर्त्मनि मारुतस्य ॥
श्राद्धार्पितज्जगता प्रवत्तम्
मन्त्रं दयध्व पितृदेवताश्च ।
अस्या वचोऽन्तिम भुजावतस्तन्
दिवाच रात्रि समुपोष्य तिष्ठेत् ॥
भवेत्स चैतेन कृतेन तेषा
यथा न मुक्तः पितृदेवतानाम् ।
निर्वित्तनिर्भोग्य निराश्रयाणाम्
श्राद्धस्य मार्गः प्रथितो मुनीन्द्रैः ॥

ख्यातं मया च्छदित्वा वः पितरः श्राद्धदेवताः ।
श्राद्धार्थस्य विमुक्तोऽस्मि भवत पितरो मया ॥
कृतोपवासः स तस्मात् श्राद्धर्णाद्विप्रमुच्यते ।
एतैश्चापि न यः कुर्य्यात् पितरस्तेन वै हतान् ॥
सम्पत्तावथ पात्राणामेकैकस्य त्रयस्त्रयः ।

पितादौ ब्राह्मणा, प्रोक्ता श्चत्वारो वैश्वदेविके ॥
द्वौ वापि दैविके विप्रौ चैकैकोवा न दोषभाक्।
स्यान्मातामहिकेऽप्येवमेकोऽपि वैश्वदेविके ॥
नतु वैकृतु सर्वेषा श्वाश्वलायनमत, स्मृतम्।
पितृणामर्चयेद्विप्रो मन्त्र, पिण्डनिदर्शनम् ॥
न मातामहिकं श्राद्धं श्रोतसुक्तन्तु साग्निके।
श्चनग्निकस्य तत् कुर्य्यादिति केचिन्मतं विदुः ॥
साग्निकस्यापि कार्यं स्यात् श्राद्ध मातामह द्विजे।
षड् दैवत्यमितीत्येकेऽप्येकेन पार्वणद्वयम् ॥
श्चपुत्रस्य पितृव्यस्य तत्पुत्त्रैर्भ्रातृजो भवेत्।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः ॥
पार्वणेन कार्य्यंस्यात् पुत्रवन् भ्रातृजेन तु।
पितृस्थाने तु तं कृत्वा शेषे पूर्ववदुच्चरेत् ॥
श्राद्धं पत्यापि कार्यं स्यात् श्चपुत्रा यास्तु योषितः।
तस्यापि हि तया कार्यमेतत्व हि तयोर्यतः ॥
भ्रातुर्ज्येष्ठस्य कुर्वीत कार्यं ज्येष्ठोऽनुजस्य च।
देवहीनस्तु तत् कुर्यात् इति धर्मविदो विदुः ॥
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
पुत्राभावेतु पत्नीच तदभावे सहोदरः ॥
पितादीनान्तु कर्त्तव्यं समीतत्से यतत्क्रमो।
नावदे,याम् ते सर्वे कृते तु स्यान्मंतत् फलम् ॥
पितामहस्य चान्येषा दस्य जीवन्नवा द्विजः।
प्रत्यक्षान्तोऽपि वै पूज्या, संस्थित्यर्थं यतश्च तत् ॥
विद्यमानस्तयाणा स्यात् प्रत्यक्षः पूज्य एव सः।

गौतमस्य मतं ह्येतदिति वाशिष्ठजोऽब्रवीत्॥
विद्यमाने तु पितरि श्राद्धं कर्त्तुमुपस्थितः।
पितृवर्त्यपितृपित्रादिः कुर्य्याच्छ्राद्धमसंशयम्॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः।
तत्पितुर्निर्वपत्यस्मात् तृतीय तु पितुः पितुः॥
अतएव द्विजः पुत्रीमुद्वहेन्न कथञ्चन।
उद्वोढ़ुः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि॥
पुत्रस्य दुहितुश्चैव समौ तौ धार्मिकौ पथि।
अर्थकृतोच विमोक्षौ तुल्यौ तौ शक्रजोऽब्रवीत्॥
मुख्यं यथा पितुः श्राद्धन्तथा मातामहस्यच।
पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते॥
दौहित्रः पार्वणश्राद्धे कालस्तु कुतपस्तथा।
तथा तथ्यास्तिलाश्च विद्वान् इति शास्त्रविदो विदु॥
काम्यमभ्युदयश्चैव द्विविध पार्वणं स्मृतम्।
तथाकामन्तु काम्यं स्याद् वृद्धावभ्युदये स्मृतः॥
क्षत्रियायान्तु यो जातो वैश्यायान्तु तथा सुतः।
ब्राह्मणस्य पितृभ्यो तु निर्वपेतां द्विजाग्रजः॥

कृमीभवति पाताले स युगानेकाविंशतिः ॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते ।
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्द्विजान् ॥
योऽद्य मन्ये द्विजांश्चान्तु शूद्राद्येतेन भोजयेत् ।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभम् ॥
यत्किञ्चिद्दुष्कृतं विप्रे पूर्वं कृतन्तु तिष्ठति ।
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्द्विजान् ।
शूद्रोच्छिष्टन्तु यो भुङ्क्ते मन्ये विप्रोऽधमः स तु ॥
कृमित्वं याति विष्ठाया युगानि चैकविंशति. ।
शूद्रोच्छिष्टन्तु भुञ्जान. मक्षाहानि द्विजोत्तम: ॥
स तद्विष्ठाकृमिर्भूत्वा प्राप्नोति हि शतं समा. ।
अतो न भोजयेद्विप्रान्निवर्पन्नैव पूजयेत् ॥
शूद्रान्न भोजनाद्युक्त इति पाराशरोऽब्रवीत् ।
अग्नौकरणपिण्डाय कुर्यादामान्नेन तु ॥
घृतदध्यादिभिर्भाज्यैः सम्पृक्तं शर्कैरपि ।
यवाद्यसंस्कृतान्नेन हेमापि च निर्वपेत् ॥
उलेन पयसा वापि नपादद्याच्छकाथा ।
नामान्नेन द्विजैः कार्यं कदाचिदपि सद्द्विजैः ॥
अर्पयित्वा द्विजो कस्तु तथापि पाकमाश्रयेत् ।
न कुर्य्यात् परपाकेन नैकपाकेन तु स्वयम् ॥
नैकश्राद्धे द्वय कुर्यान्न च कुर्यात् परान्नभुक् ।
पित्रादीना सगोत्रा ये तथा मातामहस्य च ॥
तेषामेकेन पाकेन कार्यं पिण्डविवर्जितम् ।
केचित् सपिण्डमिच्छन्ति समगोत्रन्नथा तथा ॥

पिता मातामहाश्च स्याद्भिन्नगोत्रतया तथा।
पृथक् कर्तुमशक्यः स्यादर्थपात्राद्यसम्भवे॥
अवश्यन्तत्र कर्तव्यमेकदैवमणाश्रयेत्।
येषा नोद्वाहसंस्कारो ह्यन्यसंस्कारसंस्कृता॥
सङ्कल्पितं भवेत्तेषां श्राद्धं काव्य कोऽहनि।
केचित्सपिण्डमिच्छन्ति ब्राह्मसंस्कारवत्तथा॥
आद्योऽपि ब्राह्मसंस्कारस्तस्मात् पिण्डान् प्रदीयते।
सर्वेष्वपि निमित्तेषु कर्तव्यं पिण्डसंयुतम्॥
पितृणां त्रिविधा यस्माद्गति प्रोक्ता मुनीश्वरैः।
वैश्वदेवं सदा कार्य्यो श्राद्धे च समुपस्थिते॥
पाकशुद्धर्थमेवैतत् पूर्वमेतद्विधीयते।
वैश्वदेवोऽयतश्चैव श्राद्धकाले विशेषत॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्टं तु वर्जयेत्।
सम्प्राप्ते पावणश्राद्धे एकोद्दिष्टे तथैवच॥
अग्रतो वैश्वदेवं हि पश्चादेकादशेऽहनि।
एकोद्दिष्टविशेषेण प्रागेव ह्यग्निपूजनम्॥
कालस्तु कुतपस्तस्य रौहिणः पार्वणस्य च।
वामतश्चासनन्दद्यात् पितृकार्य्येषु सत्तम॥
दैविके दक्षिणन्तद्ददिति पाराशरोऽब्रवीत्।
आसने चासनन्दद्याद्वामे वा दक्षिणेऽपि वा॥
पितृकार्येषु वामन्तु दैवे कर्मणि दक्षिणम्।
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम्॥
नाश्नन्ति पितरस्तस्य साध्यानि वत्सराणि षट्।
तस्माद्वामतो वा पात्रे पितृकर्मणि चासनम्॥

दैविके दक्षिणा तद्वदिति वाशिष्ठजोऽब्रवीत्।
कुत्र काले च कर्त्तव्यं श्राद्धन्तत् पैतृकं प्रभो! ॥
वदस्व निश्चयन्तत्र विवदन्त्यपरेऽत्र तु।
पञ्चदशमुहूर्त्तोऽहस्तत्प्रागह्नं दिनं स्मृतम् ॥
अपरार्धं स्मृता रात्रिः सन्मध्यः कुतपोमतः।
यथा यथा च ह्रस्वत्वं पुंसः स्थानेनसो भवेत् ॥
तथा तथा पवित्रं स्यात्कालः श्राद्धार्चनादिषु।
च्छायेयं पुरुषस्यैनस्तस्मादाधो भवेदधः ॥
आधानश्राद्धदानादेः स कालोऽक्षयकृत् स्मृतः।
अयुतं तु मुहूर्त्तानामह्नं ह्यष्टदशाधिकम् ॥
त्रिंशद्भिस्तैरहोरात्रमिति माध्यन्दिनी श्रुतिः।
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ॥
स कालः कुतपो ज्ञेयस्तत्र दत्तन्त्वक्षयम्।
मध्याह्ने तु गते सूर्ये न पूर्वे नच पश्चिमे ॥
तुल्याग्रसंस्थिते चैव सोऽष्टमो भाग उच्यते।
मध्याह्नाच्चलितो भानुः किञ्चिन्मन्दगतिर्भवेत् ॥
स कालो रौहिणो नाम पितॄणां दत्तमक्षयम्।
तस्मात् सर्वप्रयत्नेन रौहिणन्तु न लङ्घयेत् ॥
अकाले विधिना दत्तं न देवपितृगामि तत्।
चन्द्रवृद्धिर्भवेदत्र तत्राब्दमुभयात्मकम् ॥
श्राद्धन्तत्र च कुर्वीत मासयोरुभयोरपि।
पिण्डवर्ज्यं मलकान्ते संक्रान्ते पिण्डसंयुतम् ॥
षष्टिभिर्दिवसैर्मास स्त्रिंशद्भिः पक्ष उच्यते।
संक्रान्तिरहितः पक्ष स्तत्र कार्यं त्रिपिण्डकम् ॥

सिनीवालीमतिक्रम्य यदा सङ्क्रमते रवि ।
युक्तसाधारणैर्मासैः स काल उत्तरोभवेत् ॥
सङ्क्रान्तिवर्जित' काल,संमल. पापसम्भव. ।
रत्तसाभगणेयोऽसौ उत्सवादिविवर्जित ॥
तत्र नैमित्तिक कार्य्यं श्राद्ध पिण्डविवर्जितम् ।
नित्यं तु सततं कार्य्य मिति पाराशरोऽब्रवीत् ॥
अहोभिर्गणितैर्यत् स्यात् तत्कार्यं यत्र सर्व्वदा ।
तिथिनक्षत्रयोगश्च जातकर्मादिकाश्च ये ॥
नैमित्तिकाश्च दैवान्ये कार्य्यास्तेऽपि मलिम्लुचे ।
तीर्थस्नानं गजच्छाया द्विमुखी गोप्रदानवत् ॥
मलिम्लुचेऽपि कर्त्तव्य' सपिण्डीकरणन्तथा ।
श्राग्रहणा ममावास्या मष्टकाग्रहसक्रमम् ॥
अधिमासेऽपि कार्य्यं स्यादिति पाराशरो ऽब्रवीत् ।
नित्यश्च नित्यशः कार्यमिष्टकामाश्च वर्जयेत् ॥
वार्षिक पिण्डवर्जं स्यादन्यस्मिन् पिण्डसयुतम् ।
दृष्टिरग्रहण श्राद्ध मन्वाहार्यञ्च सर्वदा ॥
कर्त्तव्य' सतत विप्रैरिष्टिकामाश्च वर्जयेत् ।
दैवे कर्मणि संप्राप्ते तिथौ यत्रोदितो रवि. ॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥
वृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदिक द्विज ।
क्षीणमानाह्ने कार्यं श्राद्ध विदन् । क्षयादिकम् ॥
मित्रे चैव सगोत्रे च पितृमातृसहोदरे ।
आमनचैव दातव्य भोक्तव्या एवमिम ते ॥
ब्राह्मणं न सगोत्रन्तु पूजयेत् पितृकर्मणि ।

नोपतिष्ठन्ति तत्तेषां किन्तु स्यात्तु निराशता ॥
स्वगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः ।
हतास्तु पितरस्तेन न भुञ्जन्युपतिष्ठति ॥
श्राद्धं कुर्वन् द्विजोऽज्ञानात् स्वगोत्रं यस्तु भोजयेत् ।
स लुप्तपितृदेवः सन्नरकं प्रतिपद्यते ॥
तस्मान्न गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम् ।
ज्ञातिमात्रो न भोज्यस्तु उच्छितैस्तु द्विजोत्तमैः ॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्य्याच्च पैतृकम् ।
पितॄणां पावनो देशः स प्रोक्तोऽक्षयतृप्तिकृत् ॥
देशे काले च पात्रे च विधिना हविषा च यत् ।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ॥
तैजसानि तु पात्राणि स्थार्थाय भोजनाय च ।
अलाभाश्च यथान्येके अपराग्रपरैर्विदुः ॥
पलाशपद्मपत्राणि अनिषिद्धानि यानि च ।
तानि श्राद्धेषु कार्य्याणि पितृदेवहितानि च ॥
वृद्धिश्राद्धेषु मन्यन्ते मृण्मयानि तु केन च ।
शौनकस्य मतं ह्येतत् वृथाकार्य्यन्तु मृण्मयम् ॥
एकद्रव्याणि कार्य्याणि पात्राणि भोजनार्थयोः ।
त्रीणि पैतृककार्य्याणि भेदमेषान्न वर्जयेत् ॥
एकस्य वैश्वदेवानि पैतृकाण्येकवस्तुनः ।
इतिधा तानि कार्य्याणि भेदमेकं वर्जयेत् ॥
वटाश्वत्थार्कपत्रेषु न भुञ्जीत कदाचन ।
न जातिकुसुमैर्विद्वान् बिल्वपत्रैश्च नार्चयेत् ॥
सुरभीनागकर्णाद्यैः करवीरैश्च नारकैः ।

बिल्वपत्रैरर्चयेद्विद्वन् पितृश्राद्धेषु गर्हितैः ॥
तद्भवनैः कृतः श्राद्धं निराशैः पितृभिर्गतैः ।
सर्वाण्यपि च पुष्पाणि निषिद्धान्यपराणि तु ॥
वर्जयेत् पितृश्राद्धेषु केतकीकुसुमानि च ।
गोरम्भाभृङ्गराजाद्यैर्मल्लिकाकुब्जकैरपि ॥
समर्चयेत् द्विजान् श्राद्धे हव्यकव्योदिते द्विजः ।
न दद्याद्गुग्गुलं श्राद्धे द्विजानां पितृदैवते ॥
धूपाभावे तु कर्तव्यं घृतधूपं द्विजोत्तमः ।
कुङ्कुमाद्यं चन्दनञ्च देयं गन्धविमिश्रितम् ॥
ऊर्द्ध्वञ्च तिलकं कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम् ।
ऊर्द्ध्वञ्च तिलकं कुर्याद्दैवे पित्रे च कर्मणि ॥
निराशाः पितरो यान्ति यस्तु कुर्य्यात् त्रिपुण्ड्रकम् ।
पवित्रं यदि वा दर्भं करे कृत्वा द्विजान्तरः ॥
समालभेत् द्विजानञ्च स्यात् श्राद्धमसुरं भवेत् ।
गन्धाद्य विविधा देयाः कर्पूरागुरुमिश्रिताः ॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम् ।
दीपश्च सर्पिषा देयस्तिलतैलेन वा पुनः ॥
न चान्यतैलैरन्यैस्तु कदाचित् सार्षपादिभिः ।
देशधर्मं समाश्रित्य वंशधर्मं तथापरे ॥
सूरयः श्राद्धमिच्छन्ति पार्वणञ्च तथान्यपि ।
स्त्रीणामपि पृथक् श्राद्धं न मन्यन्ते स्वधर्मतः ॥
मातामहस्वगोत्रेण मातुलो तु सपिण्डताम् ।
मातामहाम्हेच्छन्ति मातुलोऽपि सपिण्डताम् ॥
स्त्रीणां स्त्रीगोत्रसम्बन्धात् पुंगोत्रेण हृणां यतः ।

सपिण्डीकरणं काले श्राद्धद्वयमुपस्थितम् ॥
देवाद्यं प्रथमं कुर्यात् पितृणां तदनन्तरम् ।
देवाद्यं पार्वणं प्रोक्तं प्रेतश्राद्धं यथापरम् ॥
एकतश्च ततः पश्चात् कृत्वा विप्रांश्च भोजयेत् ।
पितृणामर्घ्यपात्राणि प्रेतपात्रं यथापरम् ॥
प्रेतपात्रन्तु तत् कृत्वा पितृपात्रे नियोजयेत् ।
ये समाना इति द्वाभ्यां पूर्ववच्छेषमाचरेत् ॥
सपिण्डीकरणं यस्य कृतं न स्याद्द्विजन्मनः ।
श्राद्धेयं तस्य देयं स्यात् पिण्डमेकं तु निर्वपेत् ॥
सपिण्डीकरणश्चैतत् स्त्रियाश्चैव यथाह्निकम् ।
एकादशाह्निकं कृत्वा योऽहि मासि च मासिके ॥
वर्षे वर्षे च कर्तव्यं मृतेऽहनि च तत् पुनः ।
नापुत्रस्य सपिण्डत्वं केचिदिच्छन्ति तद्विदः ॥
विशेषतोऽनपत्यस्य नत्वपत्नाधिकारिणी ।
विद्यमाने पिता यस्य स चेद्यदि विपद्यते ॥
तदन्तरा सपिण्डत्वं वदन्ति श्राद्धवादिनः ।
आभ्युदयिकसम्प्राप्तौ अर्वाक् प्रागेव कारयेत् ॥
कुर्यात् परिजनेनैतत् स्वयं वापि द्विजोत्तम ॥
सन्यसन् सर्वकर्माणि तत् श्राद्धं च तद्दिने ।
अग्निदाधदिनश्चैके केचिन्मृतदिनं विदुः ॥
विदेशस्थे मृताहस्तु प्राक्केवासि तु द्वादशी ।
सग्रामे संस्थितानाञ्च प्रेतपक्षे प्रशस्यते ॥
अग्निसर्पादि मृत्यूनां षण्मासोपरि सत्क्रिया ।
तेषां पार्वणमेवोक्तं मृताहेऽपि च सप्तमे ॥

चन्द्रक्षये नागके संयुगेषु यः प्रेतपक्षे क्षतवत्सदण्डः।
पिण्डतानन्तरं मासिकानां भवन्ति तेषां मिह पार्वणानि॥
क्षयाह्निकादि कार्याणि ब्रूयुर्धर्मविदो जनाः।
अर्द्धादूर्ध्वमपराह्णे कृत्वा च वैष्णवीं बलीम्॥
विष्णुर्चन विना नार्वाक् प्रदत्तमुपतिष्ठति।
विदुता द्वादशपरेन अंशेषु मध्याह्नेण वा॥
दर्शादिकेन स्यात्..स्यात् यत्र तिथौ च तत्र च।
तन्निमित्तस्य तृप्त्यर्थं मासि मासि क्षयाह्निकम्॥
कार्त्तिक्यमवधौ याव त्तत कुर्वीत सत्क्रियाम्।
अनाग्नक क्षतानाञ्च क्षयाहेऽपि च पार्वणम्।
सन्न्यासवह्नि मन्यन्ते केचि द्विदु रवैदिकम्॥
एकोद्दिष्ट मदैव स्यादेकार्थकपवित्रकम्।
आवाहनाग्नौ करण हीन तदपसव्यवत्॥
पूर्वोत्तर श्वे देशे श्राद्धं स्यान्मात्र पूर्वकम्।
शतपीतादिपिष्टेन चर्चितं भूतले च तत्॥
उद्दिष्टक्रतुकालस्य तत् प्रागेव विधीयते।
आभ्युदयिक देवानि पूर्वाह्णे स्यु रिति स्मृतिः॥
तिलाक्षतोदकैर्युक्ता. न्यासमादिप्रदक्षिणम्।
परि स्तृत्यादि दर्भेन कृत्वा च शान्तिपूर्वकम्॥
व्रीहयो यवगोधूमा, अयताश्चाक्षताः स्मृताः।
अक्षतामलकैः पिण्डान् दधिकर्कन्धु मिश्रितैः॥
नान्दीमुखेभ्यो देवेभ्यो प्रदक्षिणा कुशासनम्।
पितृभ्य मानुषेभ्यश्च प्रदक्षिण मिति स्मृति॥
कर्कन्धुभि र्यवै पुष्पैः गन्धैर्पत्रै सितैस्तथा।

तेभ्योऽर्घ्यं प्रदातेभ्यः पितृभ्यो देवतैः सह।
मातामहानामप्येवं पद् दैवत्यं श्रियद् द्विजः॥
माङ्गल्यपूर्वक सर्वं गन्धाद्यपि च धारयेत्।
तृप्तिकृत् पितृमातृणां धूपो देयश्च गुग्गुलः॥
घृताभिघार धूपो वा यथा स्यात् परिपूर्णता।
दीपाश्च बहवो देयाः विप्रं प्रति घृतेन च॥
तैलेन केन ये वापि नवनीतेन चैव हि।
मालत्या शत पत्रावा मल्लिका कुन्दयोऽपि।
केतक्या पाटलायावा देया श्राद्धे न लोहिताः॥
वासांसि च यथाशक्त्या दद्यात्तेभ्योऽथ निक्रयम्।
परिपूर्णं तथा तत्स्यात्तथाकार्य्यं भवेदिति॥
सुवेष भूषणै स्थूलसालङ्कारै स्तथान्तरैः।
कुङ्कुमाद्यनुलिप्ताङ्गै भोव्यन्तु ब्राह्मणैः सह॥
स्त्रियोऽपितु तथा भूता गीतनृत्यादिदर्पिताः।
दुन्दुभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः॥
सोमपदोऽग्निस्वात्ताश्च तथा बर्हिषदोऽपि च।
सोमपाश्च तथा विद्ध स्तथैव च हविर्भुजः॥
आज्यपाश्च तथा वत्स तथा परे सुकालिनः।
एते चान्ये च पितरः पूज्या सर्वे द्विजाग्रजैः॥
वसवश्च तथा रुद्रा स्तथैवादितिसूनवः।
देवता ऋषिं यश्चेषु स्वायम्भुवादि कीर्तिता॥
एते च पितरो दिव्या स्तथा वैवस्वतादयः।
ये तत्पौत्रा प्रपौत्राश्च असंख्याः पितरः स्मृताः॥
एते श्राद्धेषु सन्तर्प्या सु निचाद्यै द्विजातिभिः।

सन्तर्पिता इमे सर्वान् प्रीणयन्ति तृषा पितॄन् ॥
प्राक् सङ्कल्पितांश्चि तान् स्नातान् काले समागतान्।
दत्त्वार्घ्यान् स्नतवत् शौचान् आचान्तानुपवेशयेत् ॥
ये सूयन्त्यत स न्येऽङ्कि चावर्मन्ति पिबन्ति च।
तेषान्न जायते शुद्धिराचमन्यस्वजाद्धि ते।
सर्वाणि स्वानि कार्याणि कार्यच्छिद्राणि चात्मन. ॥
तैराचान्तै र्भवेच्छुद्धिरशुचिस्त्वन्यथा भवेत्।
व्याहृत्य वैष्णवान् मन्त्रान् स्मृत्वा च सर्वमातरम् ॥
आत्मस्वान्तौ द्विजान् पृष्टे करिष्ये श्राद्धमित्यथ।
कर्त्ते करवाणीति पृष्ट्वा ब्रूयु र्द्विजास्तत. ॥
अनुज्ञायै.वचो श्रोतव कुरुष्व यत सतं कुरु।
ततो दर्भासन कृत्वा देवेभ्य समर्य पुन ॥
दक्षिणं जानुमन्वास्य दक्षिणाङ्घ्र तथासनम्।
.पात्रद्वय मतोऽर्घ्यार्थं तैजसश्चैकवस्तुजम् ॥
आसन सपवित्रं तत् समभ्यर्च्य विधानत ।
प्राङ्मुखोऽमरतीर्थेषु शन्नोदेव्योदक क्षयेत् ॥
यवोऽसीति यवास्तत्र दृष्णौ पुष्पाणि चन्दनम्।

यवोऽसि पुण्यमिति सश्रितोऽसि
सम स्थान्य प्रभुरस्युसल।
मरुनृमनुष्य पितृगणस्य दृप्तेर
ह्नितावतीर्णोऽसि हितोऽसि पुंसाम् ॥
उत्पादपूर्वक मिमानतृतेन वेधा
भूय प्रसन्न मनसा तदुपासित सन्।

चिक्षेप तान् सलिलनाथ प्रसिच्यताद्भि-
तेनाहता वरुण दैवतका बभूवः॥
आनीयमान्विधिरिमान्वरुणास्य लोकान्
अन्नप्रभूनभूवि यथान् वसुलोक तृप्तैः।
तत्पिठ पक्षहविषा पितृ देवतानाम्
तृप्ता वसन्ति दिवि दानवराज्ञएव॥

ततः सव्य करं न्यस्य विप्रो दक्षिणजानुभिः।
देवानावाहयिष्येव मिति वाच सुदीरयेत्॥
आवाहये त्यनुज्ञा च विश्वे देवाः स आगतः।
विश्वे देवा शृणुतेममिति मन्त्रद्वयं पठेत्।
सोमेन सहराज्ञेति केचित्पठन्त्यदोऽपि च॥
व्याहृत्य मन्त्रमावाह्य हस्ते दत्त्वा पवित्रकम्॥
अर्चयेत्तं द्विज पुष्पैः दद्यादर्घं करे पुनः।
विश्वेभ्य स्वेप देवेभ्यस्तुभ्य मर्घ्यं प्रदीयते॥
या दिव्या इति मन्त्रेण पाणौ विप्रस्य तं क्षिपेत्।
अपसव्य मतः कृत्वा निर्वर्त्य वैश्वदैवकम्॥
आपो भूमिगताः केचिदादित्येत्यभिमन्त्र्य च।
पुनस्ताभिकयाभ्याश्च कुर्वन्ति सुप्रमार्जनम्॥
उदक गन्धधूपांश्च वासांसि चन्दनं स्रजः।
दत्त्वा आपः च मोद्धृता दद्यात् पितृ कुशासनम्।
सोदकान् द्विगुणीभूतान् सतिलान् सकुशानपि॥
गोकर्णमात्रकान् साग्रान् प्रदद्याद्वामपार्श्वतः।
चतुर्थ्यन्तं सगोत्रश्च पितृनाम च शर्मवत्॥
उच्चार्य्य परयोस्तदिदं तुभ्यं कुशासनम्।

पितृभ्यं मर्घ्यं पात्राणि सपूज्य दक्षिणामुख. ॥
तिलोऽसीत्येतदुच्चार्य यवस्थाने तिलान् क्षिपेत् ।
भूलग्न. सव्यजानु. सन् पितृतीर्थे नवाव्वर: ।
पितृध्यानमना कुर्यात् पितृकार्यमशेषत: ॥
आवाहयिष्ये पित्रादीन् अनुज्ञावाहयेति च ।
उशन्त स्त्वेति तदीयं यथायन्तु न इत्यपि ॥
अन्येऽत्रपश्यता असुरा इत्यादि च पठन्ति हि ।
अन्यविघ्नव्यपोहार्थं वक्तव्य मिति केचन ॥
प्राग्व द्विप्राचनं कार्यं प्राग्वदर्घ्यप्रसेवनम् ।
प्राग्वन्मन्त्रं समुच्चार्य प्राग्वच्च मुखमार्जनम् ॥

एते तिलास्तु विधिना यमिलोकतस्तु
प्राक्कृत्य भोजन हिते न शुभाय यस्य ।
छित्त्वा मलानि पुरुषस्य च तर्पणाद्यै
ये घ्नन्ति तेषु भुवि सत्सु कुतो भय स्यात् ॥
तिलोऽसि चन्द्रामृतदैवतोऽसि
हितोऽस्यशेषे पितृ देवतानाम् ।
कर्तापि तृप्तिं परमां पितृणा
मुक्तोऽसिते न भवता विधिसम्भवोऽसि ॥

अर्घपात्राणि सर्वाणि कृत्वा तान् पाद्यपात्रके ।
पितृभ्य स्थान मसीतिन्युब्ज कुर्य्यादधश्च तत् ॥
यस्तू द्धरेद्विप्राणां दर्घ्यपात्रन्तु पैतृकम् ।
तद्धि श्राद्ध मभोज्य स्यात् कृत्यै पितृगणै र्गतै. ॥
आश्रित्य प्रथम पात्र तिष्ठन्ति पितरो नृणाम् ।
श्राद्धे तस्मान्न त द्विद्वानुद्धरेत प्रथम सर्घ्य. ।

वाचयेत् परिपूर्णन्तु वासोदत्त्वा विधानतः।
अस्त्वे तु परिपूर्णन्तु ब्रूयुरेते द्विजातयः॥
ससर्पिः पात्रमादाय समिधान विधानतः।
नत्वा सर्वान् द्विजान् पृच्छेत्करिष्येऽग्नाविति द्विजः॥
कुरुष्वेति त्वनुज्ञातो जुहोत्यग्नौ ततः पुनः।
भोजने पितृविप्राणामितिमन्त्र मुदीरयेत्॥
अग्निशब्दं चतुर्थेकवचनान्त समुच्चरेत्।
कव्यवाहनशब्दं च सोमं पितृमदित्यपि॥
पङ्क्तिमूर्द्धानमेवात्र पृच्छेदितिह केचन।
पितृश्राद्धप्रदानत्वात् साग्निस्त्वे नाथवा पुनः॥
तृतीयां मनसा दद्यात् यमाय त्वेतवा पुनः।
तूष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्वतु॥
अह वाक् तस्मिन् वाक् सम्वादो भूम्ननोगिरीः।
अहव्यवाद्यते वाणी अमुष्याग्नेः प्रजापतेः॥
अग्नावाहुतयः प्रोक्तास्तिस्रएव मनीषिभिः।
अग्निवद्विप्रपात्रेषु पश्चात्तज्जु हुयाद् द्विजः॥
अग्नौकरण शेषन्तु पितृपात्रेषु दापयेत्।
प्रतिपाद्य पितृणां तु दद्याद्वै वैश्वदेविके॥
यश्चाग्नौकरणं दद्यात् पितृविप्रकरेषु च।
तेनोच्छेषित मेतत् स्यात्समाप्तिस्तावतैव तु॥
पितरः कव्यवक्त्राश्च वह्निवक्त्राश्च देवताः।
अतः पाणौ न तद्देयं देयं पात्रे कुशान्विते।
वैश्वदेविकविप्राणां पात्रे वा यदिवा करे॥
अनग्निक स्तु तद् दद्यात् प्रथमं वैश्व देविके।

कृतशेषमशेषाणा पात्रे दद्याद् द्विजोत्तमः ।
पृच्छेत्सर्वांश्च यत् कृत्य सामान्येन द्विजोत्तमान् ॥
दत्त्वान्ये कारयच्चान्यं विप्राणा तृप्तिसद्भवि. ।
परिवेश्य मितिं ब्रूयु स्ततोविधिरनन्तर ॥
प्रागग्नौ कारणं दद्यात् ह्यन्यत्दत्त्वा च तृप्तिसत् ।
एकीकृतं तु भुञ्जाना प्रीणयन्तु यथा पितृन् ॥
परिवेश्यं हविः सर्वं तदर्थं यच्च वै स्मृतम् ।
अभिमन्त्य मतः पात्रमपोशनप्रदानवत् ॥
अन्नपूर्णस्य पात्रस्य कर्त्तव्य मभिमन्त्रणम् ।
आपोऽदत्त्वा तु सकलमेष श्राद्धविधिर्वरः ॥
वर्जितानि न देयानि पितृप्रीतिं विजानत ।
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥
निष्पावा राजमाषाश्च कुलत्थ कोरदूषकान् ।
मसूर सितपाकश्च पुष्पकं शाणमर्कटा ॥
आढकाश्चिलसिद्धार्थाः वस्त्रान्निसधनाम्यके ।
पिण्याकं परिदग्धा च मथितञ्च विवर्जयेत् ॥
नापि नीरस निर्गन्धं वारुञ्ज सर्वशल्कुकम् ।
अमीचित च यत्किञ्चित् पर्युषितञ्च वर्जयेत् ॥
लोहिताम् वृक्षनिर्यासान् प्रत्यक्ष लवणानि च ।
कृता कृष्णातिला वर्णाः सर्वा.पालाण्डु जातय ॥
कृष्णजीरकवंशाग्रामृणानि च विवर्जयेत् ।
कुम्भिकेषु कपालाह्वा कट्फल तण्डुलीयकम् ॥
नीलवाच समच्छला गोभाञ्जन कुसुम्भिका: ।
कोविदार वारञ्जो च सुसुग्यामूलक तथा ॥

कूष्माण्डं गौरहन्ताक व्रहत्याश्च फलानि च।
करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्बारिका सुजम्बीरा सुकरी वीजपुरिका:॥
तुम्बालावूनि पिप्पल्यः पटोलं पिण्डमूलकम्।
मसूराञ्जनपुष्प च श्राद्धे दत्त्वा पतत्यधः॥
विषच्छन्नं हतं मांसं मत्स्यञ्च चिरसंस्थितम्।
नित्यश्राद्धेऽपि वर्ज्यं स्याद्विट्दराहचकोरयोः।
स्वायम्भुवादिभिः सर्वैर्मुनिभिर्धर्मदर्शिभिः।
निषिद्धानि न देयानि पितृणां मन्दितानि च॥
एकेन किञ्चिदपरेण किञ्चित् किञ्चिच्च किञ्चित्परमस्तु सद्भिः।
श्राद्धे निषिद्धं खलसनादि विद्वन्। सर्वं पितॄणां नतु किञ्च देयम्॥
सौवीरनिम्बूलवणादिभिः सुपाकस्य शुद्धिर्भवतीह यस्य।
तद्बीजपूराम्लरिचादियोगात् सिद्धं प्रदेयं नतु दुष्यतीह॥
श्राद्धन्तु यस्य द्विजदीयमानं पित्रादिकस्येह भवेन्मनुष्यैः।
यदि श्रुतस्येह मनस्यभीष्टमासीत् पुरा यस्य तदेव देयम्॥
दातुस्तु यस्मिन् मनसोऽभिलाष अद्य भवेत्तत्र तु दीयमाने।
श्राद्धेऽपि देयं विधिवत्तदेव तद्वर्जयस्वेति इतिप्रवादः॥
आनीतमम्भोनिधिवत्कथञ्चित् तत्पाणिदत्तं भवतीह विद्वन्।
हेमाम्बुनिक्षेपहरिस्मृताभ्यां मच्छिद्रतामेति पराशरोक्तिः॥
इचीरसारैः क्षयखण्डयोगात् शापाभिधेयं भवतीह विद्वन्।
ाग्यङ्गधूपान् मरिचादियोगात् पाकस्य शुद्धिं प्रवदन्ति तज्ज्ञाः॥
व्रीहयो यवगोधुमा मुद्गा माषास्तिला स्तथा।
नीवारश्यामकाद्यन्त मकुष्टसम्भवानि च॥
शर्करागुडखण्डानि सघृतं क्षौद्रमेव च।

पितृश्राद्धे हविर्मुख्यं यदा तद्वाख्य लोभतः ॥
ईंहिना मत्र शरीरपुष्पैर्धाता ससर्जाशननाम किञ्चित्।
सर्वधान्यान्यमित ह्यवादि वेधा मुनीन्द्रेण पराशरेण ॥
ामाशराधादिकर्कुजावि यत्किञ्चदस्मिन् सुखसाररूपम् ।
रणजं वा कृषिसम्भव वा सर्वन्तदुक्तं ह्यशनेषु विद्वन् ॥
ाण्डाङ्कव.यत्त्वशनेषु किञ्चित्पङ्कोद्भव वा स्थलसम्भव वा ।
सुच्छसारं वङ्कराजमस्मिन् सर्वाणि धान्यानि च शूकवन्ति ॥
सर्वसार सतुदत्तं भक्ष्य नि.शूकसूत्रान्वितमत्र किञ्चित् ।
ाप्यायनं देहभृता तु सद्य स्तत्प्रोक्तमन्न ह्यशनेन सद्भिः॥
प्रतिस्थुतश्च भुक्तश्च कटु तिक्तश्च यत्तथा ।
क्रैचिद्भुरदेयानि ह्यश्वत्थप्रतिरोपिता: ॥
तुण्डीकरान्यलाबूनि लिङ्गाख्यानि तु यानि तु ।
नित्यं श्राद्धे ऽप्यदेय स्यादाह सत्यवतीपति ॥
सोङ्कारया वै गायत्र्या दशावर्तितया जलम् ।
पूतन्तु तेन तत्प्रोक्तं सर्वमन्त्रविशुद्धये ॥
शुद्धवत्योऽथ कूष्माण्ड्य पावमान्यस्तरत्समा: ।
एतेन वारिणैताभि रन्नशोधनमुत्तमम् ॥
'तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रदक्षवान् ।
प्रोक्षयेदशनं सर्वम् शूद्रदृष्ट्यादिशुद्धये ॥
परिवेषयेत्सर्वं सर्वं न कार्यं पङ्क्तिभेदनम् ।
पङ्क्तिभेदी हयाशी नित्य ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रे[illegible] पञ्चैते ब्रह्मपातका: ।
ापङ्क्त्यां विषम [illegible] [illegible] स्नेहाद्भयाद्वा यदिवार्थलोभात् ।
, दृष्टं महर्षिभि [illegible] ब्रह्महत्या मुनयो वदन्ति॥

देवान् पितॄन् मनुष्यांश्च वह्निमभ्यागतां स्तथा।
अभ्यर्च्य तु न भुञ्जानो वृथापाक इति स्मृतः॥
एतद्वै ब्राह्मणस्यास्ये जुहोमि चाग्निरेस्तथम्।
इदं विष्णुरिति श्रोतन्मन्त्रमुच्चार्य चापरे॥
द्विजाङ्गुष्ठं च तन्नान्ते निवेशयन्ति तद्विदः।
जप्त्वा व्याहृतिभि र्गायत्रीमधुमतीरिति॥
सङ्कल्पान्न मपोशानं ब्रूयाच्च मधुमन्विति।
आपोशन प्रदेयान्नं न तत्सङ्कल्पयेद्द्विजः॥
सङ्कल्पा नरके याति निराशैः पितृभिर्गतैः।
आपोशनो देवपित्रोः पाणौ तिष्ठति यो द्विजः॥
सङ्कल्पं कुरुतेऽज्ञानात् सुखेन पितरो हताः।
जप्त्वाथ वैष्णवान् मन्त्रान् विप्रान् ब्रूयाद्यथासुखम्॥
भुञ्जीरन्वाक्यतास्ते तु पितृदेवद्विजैर्यथा।
अत्युष्णमशन कार्य्यं वचोवाच्य पितृव्रदः॥
शूद्रश्च शूकरध्वाङ्क्ष कुक्कुटानपलापयेत्।
भुञ्जते ब्राह्मणा यावत्तावत् पुण्यं जपेज्जलम्॥
सामसान्यानुवाक्यानि पितृसूक्तानि चैव हि।
ततस्तृप्तान् द्विजान् पृच्छेत् तृप्ताः सन्त्वनुशासनम्॥
तृप्ताः स्मेति द्विजा ब्रूयुस्तदन्नं विकिरेद्भुवि।
सकृत् सकृत्पयो दत्त्वा शेषमन्नं निवेदयेत्॥
यथान्नानं तथा ज्ञात्वा पिण्डांस्तदनु निर्वपेत्।
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय विस्तरः॥
स्थालीपाकतिलोपेतं दक्षिणाभिमुखस्ततः।
अवनिज्यतिलान् दर्भान् पिण्डार्थं सवनीतले॥

तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान्।
एदेकलोकं पितृलोकमायु प्राप्ता स्तथैवं नरकं नरा ये॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डे भुवि ते प्रदत्तेः॥
यदन्नं लेपरूपन्तु क्रमात्तेषु च निक्षिपेत्।
प्रक्षाल्य सलिलं वारि अवनेजनवत् पुनः॥
निवृत्तानर्चयेत्पिण्डान् पुष्पगन्धानुलेपनैः।
दीपवासप्रदानेन पितृनर्च्य समाहित.॥
वासो वस्त्रदशां दद्याद्विधिवन्मन्त्रपूर्वकम।
केचिद्दत्त्वाविकं लोम केचिन्मत न तत्त्विति॥
पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वमश्रुकम्।
तदवस्त्रं प्रदेयं स्याद्विधिसम्पूर्णतात्मते॥
पवित्रं यदि वा दर्भं करात्तत्रैवनिक्षिपेत्।
प्रक्षाल्य हस्तावाचम्य प्रोक्षयाद्दिकमाचरेत॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात्।
खादयेयुः प्रकुर्वैतान् पितृणा तृप्ततत्परा॥
गातामहानामप्येव विप्रानाचामयेद्य।
वाच्यातीतद्विजान् स्वस्ति दद्याच्चैवाचनोदकम्॥
दक्षिणा हेम देवाना पितृणां रजत तथा।
श्रद्धया दत्त्वा स्वधाकारं व्याहरेत् श्राद्धकृद्द्विजः॥
तिष्ठन् पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति।
वाच्यतामिति विप्रोक्तिः प्रवदेत्तोत्रपूर्वकम्॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः।
ऊर्जं वहन्ति उच्चार्य जल पिण्डेषु सेचयेत्॥
याः काश्चिद्देवताः श्राद्धे विश्वयन्देन जल्पिताः।

प्रीयता मितिच ब्रूयात् विप्रैरुक्तमिदं जपेत् ।
दातारो नोऽभिवर्द्धन्ता वेदा सन्ततिरेवच ॥
श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नोऽस्त्विति ।
न्युब्जपिण्डार्घ्यपात्राणि कृत्वोत्तानानि सत्यवान् ॥
त्रिष्वा पिण्डेष्वतो विप्रान् पितृपूर्वं विसर्जयेत् ।
वाजे वाजे इति ह्युक्ता आमावाजस्य तान् बहिः ॥
ब्रूयात्प्रदक्षिणीकृत्य तथा चमृष्वमित्यपि ।
पिण्डाना मध्यम पिण्ड पितृभ्याय समाहित ॥
प्राशयेत् पुत्रकाम्या तु भार्य्या तच्छ्राद्धदस्य तु ।
स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाद्यया ।
आधत्त पितरो गर्भं आकुरैर्युद्धिजातय. ॥
महारोगगृहीतोवा तद्रोगोपशमाय च ।
अस्तु मे पितरो रोगमित्युक्ता प्राशयेद्धितम् ॥
अन्यानप्सु क्षिपेद्वा क्षिपेद्वाद्द्विजाय वा ।
अजाय वा प्रदद्यात्तु पश्चाद्विप्रविसर्जनम् ॥
उद्वाह पितृकार्य्येषु पाकामातामहाय तु ।
एकेनैव हि गच्छन्ति भिन्नगोत्रा,स्तथा द्विजा ॥
अदैवे,चाक्षय्यस्थाने तु वक्तव्यंसुप्रतिष्ठताम् ।
अभिरम्यता स्वधास्थाने विप्रोक्तिरभिरताः स्म ह ॥
ऊर्द्ध्वन्तु प्रोष्ठपद्यास्तु प्रतिपादादिकाश्च या ।
पुण्यास्तास्तिथय सर्वाः दद्यादिह सुह वह्निभि ॥
तेषाञ्चतुर्दशी प्रोक्ता शास्त्रेणापहता नरा ।
पितृभ्यश्च त्रयोदश्या गयाश्राद्धाधिक फलम् ॥
न तत्र पातयेत्पिण्डान् सन्तानेप्सु कदाचन ।

पिण्डदानेन कश्यो वग्नाय वर्दन्ति चि ॥
मन्तानेषु स्त्रयोदश्यां न पिण्डान् पातयेन्नरः ।
पातयेन्द्रमतीश्च प्राह सत्यवतीपतिः ॥
मघापूर्व्वयोदश्या पिण्डनिर्वपणं द्विजः ।
ससन्तानो नैव कुर्य्यादित्यन्ये कवयो विदुः ॥

य. संक्राने भानुर्दिने च कुर्य्यात्
विशेषतः मारणक द्विजन्मा ।
पिण्डप्रदानं पितृभेच तद्वत्
ज्येष्ठे प्रपदो सुतोऽनजोवा ॥

पुत्रधा पञ्चमी कर्तुस्तथैवैकादशी तिथि ।
सर्वकामा त्वमावास्या पञ्चम्यर्थं शुभा स्मृता ॥
अन्नक्षीरमृतं क्षौद्रमैक्षवञ्चावशाकवा ।
एतैस्तु तर्पितैर्विप्रैस्तर्पिता पितरो दृशाम् ॥
देशः पर्वच कालश्च हवि पात्रं च शक्तितः ।
पितृदैविकचित्तत्व योगश्चेत् पितृभाग्दिभि. ॥
शौचश्च पालशुद्धाच श्राद्धश्च परमा यदि ।
अन्नतत्तृप्तिमच्छ्राद्धे एतत् खलु नचामिषे ॥
यत्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्य्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे तथा किञ्चिद्बाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वथास्य तथा न स्यात्तदैवामिषमाश्रयेत् ।
ब्राह्मणश्च स्वयं नाश्नात्ततः श्राद्धिकृतं यदि ॥
यद्यान्यत्पापमत्यूना शुद्ध्यर्थं श्राद्धमुच्यते ।

कर्मेन तेन येषान्तु मृत्युरुपतिष्ठति॥
दन्तिशृङ्गिसरव्याल निरग्निदग्धैस्तथा।
विद्युन्निपातशस्त्रैश्च विप्रैश्च स्वात्मना हताः॥
प्राणसङ्घातकीटाद्यैः म्लेच्छैश्चैव हतास्तथा।
पापहत्यव एवैते शुभगत्यर्थमुच्यते॥
नारायणबलिः कार्य्यो विधानन्तस्य उच्यते।
ऊर्द्ध षण्मासतः कुर्य्यादिक ऊर्द्ध्वन्तु वत्सरात्॥
तेषां चैव व्यपोहार्थं कार्य्यो नारायणो बलिः।
धौतवासाः शुचिः स्नात एक दश्यामुपोषितः॥
शुक्लाश्चैतु सम्पूज्यो विष्णुमीशं यमन्तथा।
नदीतीरं शुचिर्गत्वा मदद्याद्दश पिण्डकान्॥
घृताज्यतिलसंयुक्तान् हविषा दक्षिणामुखः।
अभ्यर्च्य पुष्पधूपाद्यैः पुन्नामगोत्रपूर्वकान्॥
विष्णुध्यानमनाः कुर्य्यात् ततः स्नानाम्भसि क्षिपेत्।
निमन्त्रयीत विप्रांश्च पञ्च सप्ताथ वा नव॥
द्वादश्यां कुतपे स्नानान्ते वस्त्रान् समागतान्।
पर्य्युपासनकृद्भक्त्या प्रक्षालिताङ्घ्रियुग्मकान्॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत्।
दैवे द्वौ तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान्॥
आसनावाहनार्घ्यञ्च कुर्यात् पार्वणवद्द्विजः।
भोजयेद्भक्ष्यभोज्यैश्च घोरैः पराज्ययोदयैः॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिप्रश्नं यथाविधि।
भोज्येन तिलमिश्रेण हविष्येन च तान् पुनः॥
पञ्च पिण्डान् प्रदद्याद्वै देवरूपमनुस्मरन्।

विष्णु ब्रह्मशिवेभ्यश्च त्रीन् पिण्डाथ यथाक्रमम् ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ।
मृत सङ्क्षिप्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णु स्मृत्वा चिपेत पिण्डं पञ्चमञ्च ततः पुनः ।
दक्षिणाभिमुखश्चैव निवेश्य पञ्च पिण्डकान् ॥
आचम्य ब्राह्मणान् पश्चात् मोचणादिकमारभेत् ।
हिरण्येन च वासोभिर्गोभिर्भूम्याच तान् द्विजान् ॥
प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत् ।
तिलोदकं करे दत्त्वा मेतं संस्मृत्य चेतसि ॥
गोत्रपूर्वं चिपेत्पाणौ विष्णु बुध्या निवेश्य च ।
बहिर्गत्वा तिलाम्भस्तु तस्माद्द्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यत ।
एवं विष्णुमते स्थित्वा यो दद्यात्पापमृत्यवे ॥
समुद्धरन्ति तं मेत पराशरवचो यथा ।
सर्वथा पापमृत्यूना कार्यो नारायणो बलिः ॥
तस्मादूर्ध्वं तु तेभ्योऽपि प्रदत्तमुपतिष्ठते ।
एव श्राद्धैः समस्ताभ्य. सन्तर्पयति वै पितृन् ॥
दद्युस्तानुत्तमामायु पितरस्तर्पिताः परान् ।
विद्यातपोसुखान् पुत्रान् पूज्यत्वमथ योषितः ॥
सौभाग्यै श्वर्यतेजश्च मन श्रेष्ठमरोगताम् ।
यश शुचित्वकृत्यानि सिद्धिरैवात्मशाश्वताम् ॥
यशस्त्वन्दीर्घमायुश्च तथैवामुमरां मतिम् ।
यायान्यत् किञ्चिद्राज्यामि पितृणां तु हिताय वै
फलनैव स्वल्पेनापि प्राप्नुवन्ति विधेः फलम् ।

उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः ॥
श्राद्धे विहित यत्प्राक् पितृगणहितैषिभिः।
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः ॥
तत्रैव भक्षयेद्भूमौ तिलदर्भसमन्वितम्।
नरकेषु गता ये वै अल्पमृत्युमृता मम ॥
एतदाप्यायनन्तेषां चिरायैतद्ब्रवीन्मनुः।
करस्य मध्यतो देवा, करपृष्ठे तु राक्षसाः ॥
पादस्यानन्भसादौच तस्मात्तन्न प्रदर्शयेत्।
दर्भाश्च स्वयमानीया दक्षिणापवर्णोद्भवाः ॥
तर्पणाद्युक्षिता ये वै इत्यादाय विसर्जयेत्।
न कुर्यद्भूयमित्याङ्कुर्दर्भमूल कुशः स्मृतः ॥
छिन्नदर्भा इति प्रोक्ता तदग्र कुतप. स्मृतः।
हरिता याज्ञिका दर्भा पीतकाः पाकयाज्ञिकाः।
सकृद्याः पितृदैवत्यच्छिन्ना वै वैश्वदेविका ॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः।
दर्भाग्रे शङ्करस्तस्मो दर्भाः देवत्रयान्विता. ॥
अहन्येकादे यश्राद्धे प्रतिमासं तु वत्सरम्।
प्रतिसम्वत्सरं कार्य मेकोद्दिष्ट तु सर्वदा ॥
एकाम्य प्रथमं श्राद्धं सर्वाणब्दाग्र मासिकम्।
प्रतिसम्वत्सरस्यैव शेषतिपुरुष स्मृतम् ॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुते।
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यव पार्वणम् ॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सर द्विजः।
मातापित्रोः पृथक्कार्य मेकोद्दिष्ट यथाहनि ॥

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते।
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रघातिते ॥
पित्रादयस्त्रयो यस्य शस्त्रघातास्त्वनुक्रमात्।
स मृते पार्वणं कुर्यात् अष्टकानि पृथक् पृथक् ॥
सपिण्डीकरणादूर्ध्वं पितुर्यः प्रपितामहः।
स तु लेपभुगित्येव प्रलुप्तपितृपिण्डतः ॥
सपिण्डीकरणादूर्ध्वं कुर्यात् पार्वणवत्सदा।
प्रतिसम्वत्सरं विद्वान् च्छागलेपोविधिः स्मृतः ॥
सपिण्डता तु कर्त्तव्या पितुः पुत्रैः पृथक् पृथक्।
स्वाधिकारप्रवृत्तत्वादितरः श्राद्धकर्तृवत् ॥
यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं भवेत्।
प्रतिमासं तस्य कुर्यात् प्रतिसम्वत्सरं तथा ॥
अर्वाक् सम्वत्सरात् वृद्धौ पूर्णे सम्वत्सरेऽपि च।
एकपिण्डीकृतानान्तु पृथक्त्वं नोपपद्यते ॥
सपिण्डीकरणादूर्ध्वं मृतकृष्णचतुर्दशीम्।
ये सपिण्डीकृतास्तेषां पृथक्त्वं नोपपद्यते ॥
पृथक्त्वकरणे तस्य पुनः कार्या सपिण्डता।
स्त्रियः स्वश्वा पतिर्माता तया सह सपिण्डयेत् ॥
तदभावे पितामह्या तन्माता चापरे विदुः।
नान्यथा तु पितामह्या मातामह्यास्तथापरे ॥
उदके पिण्डदानञ्च भर्त्रा सह प्रदीयते।
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषोऽपि वा ॥
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्।
अपुत्राश्च मृता ये च कुमाराः संस्कृता अपि।

समानता न तेषां स्यान्न स्वधा नाभिरम्यताम् ॥
भर्ता सपिण्डता स्त्रीणां कार्येति कवयो विदुः।
श्वश्र्वा सहापरे तस्यास्तन्मात्रा वा परे विदुः ॥
अनपत्येषु मेतेषु न स्वधा नाभिरम्यताम्।
एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ॥
भिन्नबन्धुसपिण्डेभ्यः स्त्रीकुमारस्य चैव हि।
दद्याद्वै मासिकं श्राद्धं सम्वत्सरं तु नान्यथा।
अमत्यगतश्चैव कुलदेशस्थवत्स्थिता ॥
यो यथा रूपया युक्तः स तथैव हि निर्वपेत्।
दार्ढ्यार्थं दृश्यते रूढे मानवं लिङ्गमेव च ॥
दृष्टीकृताच विद्वद्भिर्लोकरूढिर्गरीयसी।
विकल्पेषु च सर्वेषु स्वयमेवैक मादितः ॥
अङ्गीकरोति यः कर्ता सविधिस्तस्य नेतरः ॥
बह्वन्याजयते यस्तु वर्णबाह्यांश्च नित्यशः।
म्लेच्छांश्च पौण्ड्रकांश्चैव स विप्रो बह्वयाजकः ॥
वर्त्तते यश्च चौर्येण सुवर्णेनोपहारकः।
स गृहीतसवर्णास्त्री स विप्रो गण उच्यते ॥
मृते भर्त्तरि या नारी रहस्यं कुरुते पतिम्।
ते तु वै आपयेद्गर्भं सा नारी गणिका स्मृता ॥
अन्यदत्ता तु या कन्या पुनरन्याय दीयते।
अक्षता अभिन्नयोन्यां पुनर्भूः कीर्त्तिता हि सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता।
पुनः पत्युर्गृहं गच्छेत् पुनर्भूः सा द्वितीयका ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।

सवर्णाय सपिण्डाय पुनर्भूः सा तृतीयका ॥
प्राप्ते द्वादशवर्षेऽ त्र या रजो न बिभर्ति हि।
धारितन्तु तया रेतो रेतोधाः सा प्रकीर्तिता ॥
भर्तुर्या व्यभिचारेण नारी चरति नित्यशः।
अस्या अपि न भोक्तव्यं सा भवेत् कामचारिणी ॥
भर्तुः शासनमुल्लङ्घ्य स्वकामेन प्रवर्तते।
दीव्यन्ती च हसन्ती च सा भवेत् कामचारिणी ॥
पतित्यक्ता तु या नारी गृहादन्यत्र गच्छति।
गृहेषु रमते नित्यं स्वैरिणीन्ता विनिर्दिशेत् ॥
पतिं त्यक्त्वा तु या नारी सवर्णमन्यमाश्रयेत्।
वर्तते ब्राह्मणत्वेन द्वितीया स्वैरिणी तु सा ॥
मृते भर्तरि या बाला क्षुत्पिपासातुरा तु सा।
तवाह मित्युपगता तृतीया स्वैरिणी तु सा ॥
देशकालमुपेक्ष्यैव गुरुभिर्या प्रदीयते।
उत्पन्नसाहसान्यस्मै चतुर्थी स्वैरिणी तु सा ॥
असुपुत्रासु ये जातास्ते वर्ज्या हव्यकव्ययोः।
तथैव यतदसासां वर्जनीया प्रयत्नतः ॥
श्राद्धेषु न कर्तव्यं प्रतिलोमविधानतः।
वर्णाश्रमवहिः स्थासे सङ्कीर्णजन्मसम्भवाः ॥
मातृणाञ्च पितृणाञ्च स्त्रीयानां पिण्डदाः स्मृताः।
उपपतिसुतो यस्तु यश्चैव दीधिषूपतिः ॥
परपूर्वा परित्यक्ता वर्ज्याः सर्वे प्रयत्नतः।
चण्डालादिजाताश्च विशेषेण च वर्जयेत् ॥

इतरे तुर्यवर्णेषु तपः परममुच्यते ।
भर्तुश्चित्यां समारोहेत् या च नारी पतिव्रता ।
अहन्येकादशे प्राप्ते पृथक्पिण्डं नियोजयेत् ॥
श्रौतैश्च स्मार्त्तमन्त्रैश्च दम्पत्या वेवं तांहतौ ।
एकमृत्युगतौ चैव वह्निरेकत्र यौ कृतौ ॥
एकाच तु तयोर्यस्मात् जातमाद्याय सानकम् ॥
एकादशाहिकं श्राद्धं एकमेव स्मृतं बुधैः ।
एकत्वमिच्छन्ति मतिप्रहीणा एकादशाद्येषु हृशान्तु नार्य्यः।
ते स्वर्गमार्गे विनिहत्य कुर्युःस्त्रीसत्वदाता नरकेऽधिवासम् ॥
समानमृत्युना यस्तु मृतोभर्त्ता च योषिताम् ।
तस्याः सपिण्डता तेन पिण्डमेकं तु निर्वपेत् ॥
स्त्रीपात्रं पतिपात्रे तु सिञ्चयेदेकमेवहि ।
श्राद्धे त्रिपुरुषे तोषिणि तत् प्रत्यक्ष पितॄन् प्रति ॥
पत्या सह परा सुप्ता तेनैवास्याः सपिण्डता ॥
पितामहस्यापि चान्यत्र स्त्रोतदाह पराशरः ।
अन्यमीतौ न चान्यस्य तृप्तिः कस्यापि दृश्यते ॥
एव धीमत्वमुचापि तस्मान्नेकत्वमालने ।
एकत्वाश्रयणे धर्मो नार्हालुब्धो भवेद्ध्रुवम् ॥
तस्याः सुकृतसामर्थ्यात् पत्युः स्वर्ग इहेष्यते ।
भर्त्रा सह मृता यातु नाकलोकमभीप्सती ॥
साम्यचाहे पृथक् पिण्डो नैगमन्तु स्मृतं बुधैः ।
पतिमृत्युः स्त्रियोमृत्यो निमित्तमेव जायते ॥
निर्निमित्तो नवै मृत्यु र्स्त्युना चैकता भवेत् ।

भर्त्रा सह मृता भार्य्या भर्त्तारं सा समुद्धरेत्॥
तस्याः पतिव्रताधर्म एकत्वे तु हतो भवेत्।
बलीयस्त्वेन धर्मस्य तुच्छत्वाच्च समस्तया॥
धर्मेण लिप्यते पाप मेकत्वे समता तयोः।
नैकत्वस्तु तयो रस्मादकार्य्यं श्राद्धकर्मणि॥
दृशगहनि कर्त्तव्यं श्राद्धमेकादशादिकम्।
यानि श्राद्धानि कार्य्याणि तान्युक्तानि पृथक् पृथक्॥
कर्त्तव्यं यत्र तेऽप्युक्ता विशेषञ्च निबोधत।
औरसाद्या मृताः पुत्रा मुनिभिर्द्वादशैव तु॥
यथाक्षात्यनुसारेण वर्णानामनुसारतः।
श्राद्धदाः क्रमेण स्युः पूर्वाभावे परः परः॥
यस्माद्यो जायते पुत्रः स भवेत्तस्य पिण्डदः।
तस्मात्तस्मादपीहन्ते मृताः प्रेतत्वमागताः॥
तस्मादवश्यमेवं हि श्राद्धं कार्य्यं विधानतः।
शूद्रस्य दासीजः पुत्रः कामदस्तु स पिण्डदः॥
जात्या जातः सुतो मातुः पिण्डदः स्यात् सुतोऽपि च।
जनकस्य न किञ्चित् स्याद्दूर्थात्कामप्रवर्त्तनात्॥
वायुभूताश्च पितरो दत्ताभिकाङ्क्षिणः सदा।
तस्मात्तेभ्यः सदा देयं द्विभिर्द्धर्मरतैः सदा॥
ये षड्भिर्मासमधुपायससर्पिरन्नै-
र्देशे च कालसंहिते च सुपात्रदत्तैः।
प्रीणन्ति देवमनुजान् पितृवंशजांश्च
तेषां द्रुवां तु पितरो वरदा भवन्ति॥

उक्तश्राद्धविधिस्त्वेष वर्णानां पितृतृप्तिकृत्।
एवं दास्यति यः श्राद्धं वरान् सर्वानवाप्स्यति ॥
इति श्रीवृहत्पाराशरीये श्राद्धनिर्णयो नाम
पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः।

अगस्त्य उवाच।

अथातः सम्प्रवक्ष्यामि शुद्धिं पाराशरोदिताम्।
सूतके वाप्यशौचे वा यथावत्तां निबोधयेत् ॥
प्रसवं सूतकं प्राहु राशौचं शाव मुच्यते।
यावत्कालश्च यन्मासं तथा तावन्निगद्यते ॥
केषाञ्चित्तेन वै मासं केषाञ्चिन्मरणान्तिकम्।
सद्यःशौचास्तथा चान्ये चान्ये चैकाहिकाः स्मृताः ॥
त्रिषट्दशदशद्वाभ्यां दशापि चोह पञ्चभिः।
तान्येव त्रिगुणान्याहु र्दिनान्यैव मनीषिणः ॥
वक्ष्यमाणं निबोध त्व मुक्तक्रममिदं द्विज !।
शक्तिजो यन्मुनीनाञ्च प्राक् ब्रवीत् कलिधर्मवित् ॥
विष्णुध्यानरतानाञ्च सदैव ब्रह्मचारिणाम्।
गृहमेधिद्विजानान्तु तथैव व्रतचारिणाम् ॥
वेदतत्वार्थवेत्तृणां नित्यस्नानकृतां तथा।
अन्तःसंसर्गिणामेषां नाशौचं नापि सूतकम् ॥
संसर्गं वर्जयेद्यत्नात् संसर्गो दोषकारणम्।

वदन्ति मुनयः सर्वे वर्जने स्यान्न किल्बिषी ॥
वदन्ति मुनयः सर्वे संसर्गो दोषकारणम्।
असंसर्गः स्वकर्मस्थो द्विजो दोषैर्न लिप्यते ॥
दानोद्वाहोत्सवे ग्रामे देशविप्लवकादिके।
सद्यः शौचं द्विजातीनां सूतकाशौचयोरपि ॥
दातॄणा वृत्तिनामेके कवयः सत्रिणामपि।
सद्यः शौचमदोषाणां मूचुर्धर्मविदः कलौ ॥
सर्वमन्त्रपवित्रस्तु अग्निहोत्री षडङ्गवित्।
राज्ञा च श्रोत्रियश्चैव सद्यःशौचः प्रकीर्तितः ॥
देशान्तरगते ताते स्मृते वापि सगोत्रिणि।
शेषाहानि दशाहार्वाक् सद्यः शौचमतः परम् ॥
पिण्डनिर्वर्तने जाते स्मृते वापि सगोत्रजे।
सद्योऽप्यहेति वासे स्यात् सद्यः शौचं विशोधनम्॥
सद्यः शौच विधातव्य सर्वाश्च दशजन्मन'।
बान्धवादिषु विज्ञेय मन्यदूर्द्धं विधीयते ॥
नाशौचसूतके स्यातां नृपतीनां कदाचन।
यज्ञकर्मनिरतस्य ऋत्विजो दीक्षितस्य च ॥
पृथक् पिण्डमृते काले विदेशेऽन्यत्र च श्रुतेः।
जाते वापि च शुद्धिः स्यात् सद्यः शौचादसंशयम् ॥
सपेटः साग्निको दाशात् ब्राह्मणः शुद्धिमाप्नुयात्।
तथैकाशी नृपे मंस्ये तथैव ब्रह्मचारिणि ॥
दुर्भिक्षे राष्ट्रभङ्गे च आपत्कालसमुपस्थिते।
उपसर्गमृतेऽपि सद्यः शौचं विधीयते ॥
गोविप्रार्थविपन्नानां चाण्डेषु तथैव च।

ते योगिभिःसमाज्ञेयाः सद्यः शौचं विधीयते ॥
विप्रे सख्ये व्रतादर्वाक् श्रोत्रिये च तथा द्विजैः ।
अनूचाने गुरौ चैव आचार्ये वापि संस्थिते ॥
असंस्कृतस्त्रिया रात्रि श्रोत्रिये द्विधनङ्गते ।
त्रिरात्रमेव शौच स्यात्तथैवोदकदायिनः ॥
विधानेनाग्निको विप्र स्त्रिरात्राच्छुद्धिमाप्नुयात् ।
मनीषिणा, परे त्र्यहु रसपिण्डे त्र्यहं स्मृतं ॥
प्रेतभूतस्य यः शूद्रं ब्राह्मणाज्ज्ञानदुर्बलः ।
नियत स्त्वनुगच्छेत त्रिरात्रमशुचि र्भवेत् ॥
षड्रात्रं नवरात्रञ्च शवस्पर्शी विशुद्धकृत् ।
त्र्यहञ्चैव विशुद्ध्यर्थं धर्मशास्त्रविदो विदुः ॥
अनाथं ब्राह्मण प्रेत ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफल मनुपूर्वं लभन्ति च ॥
अशुचित्व न तेषान्तु पाप वाशुभकारणम् ।
जलावगाहनं तेषां सद्यः शौच विधीयते ॥
असगोत्रम सम्बन्ध प्रेतीभूत तथा द्विजम् ।
उद्धादग्धद्विजाः सर्वे स्नानान्ते शुचयः स्मृताः ॥
एकरात्रं वहन्त्येके सद्यः स्नाने तथा परे ।
गोग्रहादिष्वनाथाश्च मुनयः शुचिकारणम् ॥
हतश्च यो विपद्येत शत्रुभिर्यत्र कुत्रचित् ।
स मुक्तो यतिवत्सद्यः प्रविशेत्परवेधसि ॥
सन्यासी मुद्दसंस्थश्च सम्मुखं शत्रुभिर्नरः ।
सूर्य्यमण्डलमेतावर्ति प्राहुर्मनीषिणः ॥
पराङ्मुखे हते.सैन्ये यो युध्य निवर्त्तते ।

तत्पदानीष्टतुल्यानि स्मृत्वा चाह पराशरः॥
वह्नौ तु प्रविशेद्यस्य लोहितं शिरसः पतत्।
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य च॥
सन्यासेन मृता ये वै प्रधने ये तनुत्यजः।
मुक्तिभाजनकार्श्वं ते इति वेदो निदर्शनम्॥
सद्यः शौचं विधातव्यं शुचिरेवं विधीयते।
नोच्यन्ते ते मृता लोके सद्यो ब्रह्मवपुर्गमाः॥
सन्ध्याचारविहीनानां सूतकं ब्राह्मणा ध्रुवम्।
अशौचं वा दशाहं स्यादिति प्राह पराशरः॥
राज्ञस्तु द्वादशाहं स्यात् पक्षो वैश्यस्य पावनः।
वृषभस्य तथा मास त्रयोदश्यति धर्मतः॥
क्षत्रियादि पक्षः सद्भिर्मातुलादिषु कीर्तितः।
गर्भस्रावे तु तैस्तुल्या रात्रयो माससम्मिताः॥
स्रावद्गर्भस्य विद्वांसो मासादर्वाक् चतुर्थकम्।
पाताद्गर्भं यदन्यैके तत्राधिपत्यं च सूतकम्॥
ऋणव्यसनरोगार्तपराधीनच्छूद्रकम्।
तस्करायन्तो निराचाराः पितृमातृविवर्जिताः॥
स्त्रीजितास्त्वनपत्याश्च देवब्राह्मणवर्जिताः।
परद्रव्यं जिघृक्षन्तः सदाः सूतकिनः सदा।
पूर्वे किं मत्यशुद्धेया यन्यदापद्यते यदि॥
पूर्वेणैव तु शुध्येत यानि जातं मृते मृतम्।
एकपिण्डाः स्वदायादाः पृथक् दारनिकेतनाः॥
जन्मनि मरणे वापि भवेत्तेषां तु सूतकम्।
यानीधशुभ्रपातेच देशान्तरगतेऽपि वा॥

बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयते ।
अजातदन्ता ये बाला येच गर्भाद्विनिःसृताः ॥
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ।
विवाहोत्सवयज्ञेषु चान्तराशौचसूतके ॥
पूर्वसङ्कल्पितानर्थान् तानशौच्यान् मनोर्मनुः ।
शिल्पिनः कारुकाश्चैव दासीदासास्तथैव च ॥
इत्यादीनां न ते स्नातामनुगच्छन्ति या द्विजः ।
पिता पुत्रेण जातेन दद्यात् श्राद्धन्तथोदितम् ।
पितृणां विधिवद्दान तत्र तत्राप्यनन्तकम् ॥
प्रसवे च द्विजातीनां न कुर्य्यात्सङ्करं यदि ।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥
अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात् ।
उद्बध्य म्रियते यस्तु न तस्याग्नि प्रदीयते ॥
न स्नायान्नोदकं दद्यान्नापि कुर्य्याद्विशोचताम् ।
सर्पेण शृङ्गिणा वापि जलेन चाग्निना तथा ॥
न स्नानादौ विपन्नस्य तथा चैवात्मघातिनः ।
अर्वाक् द्विहायनादग्नि न दद्यान्मृतकस्य च ॥
किन्तु तान्निखनेद्भूमौ कुर्य्यान्नैवोदकक्रियाम् ।
सर्पादिप्राप्यमृत्यूना मग्निदाहादिकाक्रियाः ॥
षण्मासेतु गते कार्या इति प्राह पराशरः ।
श्राद्धेष्टं बुधैः कार्यमप्यत्यन्ताधमात्मिकम् ॥
तत्कृत्वाप्युक्तदिवसैः शुद्धमर्हति धर्मतः ।
अन्यायमृतविप्राणां ये वोढारो भवन्तिहि ॥
अग्निदाश्चैव ये तेषां तथोदकादिदायिनः ।

उद्बन्धनमृतस्यापि यश्छिन्द्यात् रज्जुपाशकम् ॥
ते सर्वे पापसंयुक्ता प्रायश्चित्तस्य भाजनाः ।
यः सूतकाशौचविशुद्धकृत् स्यात्
आश्रित्य कालन्तमनुक्रमेण ।
पाराशरस्यात्र विनिश्चिताया
वाच्यास्ततो निष्कृतयो द्विजास्ताः ॥
सूतकाशौचयोः रक्ताः शुद्धिपन्थाऽनुपूर्वश ।
सर्वैनसां विशुद्ध्यर्थं प्रायश्चित्तमथाब्रवीत् ॥
मनुर्वा याज्ञवल्क्यास्तु वशिष्ठ प्राह निष्कृतिम् ।
सा कृतादिषु वर्णानां सति धर्मे वपुष्मति ॥
मानसा वाचिका दोषास्तथा वै कार्य्यकारिताः ।
धर्माधीना यथा सर्वे जायन्ते तेऽप्यनिच्छताम् ॥
तेषामुपरताद्यापा प्रेत्येह शुभमिच्छताम् ।
शक्तिजो निष्कृतिं प्राह युगधर्मानुरूपतः ॥
निष्कृतिं व्यवहाराणां सर्वं निष्कृतिकृद्यतः ।
कृति विप्रैः कथ रूपैरिति वाच्या भवेद्वि सा ॥
तद्रूपञ्च प्रवक्ष्यामि यावद्भिः सा द्विजैर्भवेत् ।
यथाविधाय विप्रा स्युरिति विद्वन् ! प्रकीर्त्यते ॥
पर्षद्गवरा प्रोक्ता ब्राह्मणैर्वेदवित्तमैः ।
तं च ब्रूयः स धर्मः स्यात् स्वयम्भूरित्यकल्पयत् ॥
देशशास्त्रविदो विप्रा य ब्रूयुः सप्त पञ्च वा ।
त्रयो वापि स धर्मः स्यादेको वाध्यात्मवित्तम ॥
सयमं नियमं वापि उपवासादिकञ्च यत् ॥

न लक्षणे तु मूर्खाणां नचैवाधर्मवादिनाम्॥
अविदुषां नातिलुब्धानां नचापि पक्षपातिनाम्।
श्रुताध्ययनसम्पन्न: सत्यवादी जितेन्द्रिय:॥
सदा धर्मरत: शान्त: सदापर्षत्समर्हति।
न सा वृद्धैर्न तरुणै र्न सुरूपैर्धनान्वितै:॥
त्रिभिरेकेन पर्षत् स्याद्विद्वद्भिर्विदुषापि च।
तनया वयसापि स्यु र्वेदधर्मविदो द्विजा:॥
शिशवोऽपि हि मध्यस्था: सर्वत्र समदर्शना:।
न सा विप्रै र्भवेद्वृद्धै र्वेदा स्यु र्धर्मवादिन:॥
यत्र सत्यं स धर्म: स्यात् स्थलं यत्र न तादृशम्।
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मो वृथा यत्र न सत्यमस्ति
सत्यं न तद्यच्छलहटानुविद्धम्॥
निष्कृतौ व्यवहारे च वृद्धस्यार्थसंनेऽपि च।
धर्मं वा यदिवाऽधर्मं पर्ष यत्प्राह तद्भवेत्॥
स्त्रीणाञ्च बालवृद्धानां रोगिणां कुशरीरिणाम्।
उपवासाद्यशक्तानां कर्त्तव्योऽनुग्रहश्च तै:॥
ज्ञात्वा देशञ्च कालञ्च व्यय: सामर्थ्यमेव च।
कर्त्तव्योऽनुग्रह: सद्भि र्मुनिभि: परिकीर्तित:॥
लोभान्मोहाद्भयान्मैत्र्याद्यदि कुर्युरनुग्रहम्।
नरकं याति ते मूढा शतधा वाप्तवाचिन:॥
प्रविश्य चोत्तमान्ते वै पर्षदानुग्रहात् स्थित:।
यथाकाल प्रकुर्युस्ते प्रायश्चित्तन्तदीरितम्॥

किन्त्वयं याचते देवः वरस्तोऽत्र द्विजातयः ।
सर्वे कुर्वन्ति नियतं गतपापं न संशयः ॥
प्रसादो विविधो दैव्यो दैत्याश्चासुरयेवच ।
क्रीडयापि च तत्रैव देयास्तथैव ते द्विजाः ॥
व्यवहारी गोसमैस्तु ब्रूयाद्वापि च वै रतः ।
तयास्तत्तु तत्पापन्तत्तथैव निवेदयेत् ॥
यस्तेषामन्यतो ब्रूयात् स पापीयानुपतत्यधः ।
सत्यमसत्य मेवात्र विपर्यस्तं वदेदिति ॥
स एवानृतवादी स्यात् सोऽनन्तनरकं व्रजेत् ।
ज्योतिष व्यवहारश्च प्रायश्चित्तं चिकित्सितम् ॥
अजानन्यो नरो ब्रूयात् साहस किमतः परम् ।
व्यवहारच ते. प्रोक्तौ मन्वाद्यै धर्मवत् क्षमिः ॥
प्रजाभिर्न तु सर्वाभिर्नान्यैश्चतुर्भिर्मानवैः ।
तत् साधकप्रमाणानि व्याख्यितानि न तैर्विना ॥
जलादिनीचादिव्यानि साक्ष्योक्त्या शपथानि च ।
अन्ये जनपदाचारा श्चाधर्म स्तथापरः ॥
पर्षद्भि र्ब्राह्मणैर्मत्वा निर्णेतव्यो यथाविधिः ।
यत्र जात्यनुसारेण देशकालानुधर्मतः ॥
कर्त्तव्यः सत्तमैः सर्व माननीयोऽभिवादिभिः ।
गोब्राह्मणहतानाञ्च ये स्युर्दाहादिकारिणः ॥
तप्तकृच्छ्रेण शुद्ध्येयुरिति पाराशरोऽब्रवीत् ।
भोजयेद्ब्राह्मणान् पश्चात् स दद्या गौश्च दक्षिणाम् ॥
जायते पापनिर्मुक्तः शक्तिसूनो यथा वचः ।
अनाशिका निवृत्ता ये ब्रह्मचर्यात्तथा द्विजाः ॥

वैकालिकास्तु विज्ञेयाः सर्वकार्य्यविवर्जिताः।
सर्वे प्रविशयेयु वैते च बैडालिकैः समाः॥
तेषां सर्वाण्यपत्यानि पुक्सैः सह घातयेत्।
ब्रह्मघ्नश्च सुरापश्च स्तेयी गुर्वङ्गनागमः॥
एतेषां निष्कृती ब्रूयादेतत् संसर्गिणा मपि।
द्वादशाब्दन्तु विचरेद्ब्रह्मघ्नस्तत्कपालधृक्॥
सर्वत्र ख्यापयन् कर्मभिक्षा विप्रेषु सञ्चरन्।
दृष्ट्वा सेतुं समुद्रस्य स्नात्वा तु लवणाम्भसि॥
ब्राह्मणेषु चरन् भिक्षां स्वकर्म ख्यापयन् शुचिः।
मुण्डितस्तु शिखावर्जं स कौपीनो निराश्रयः॥
चीरचीवरवासा वै त्रि. स्नायी सन् शुचिव्रती।
सयताश्चरेच्छान्त स्छत्रोपानह्वर्जितः॥
ब्रह्मघ्नोऽस्मीत्यहं वाच मिति सर्वत्र वै वदेत्।
गवाञ्च विंशतिर्दद्याद्दक्षिणां वृषसयुताम्॥
ब्राह्मणेभ्यो निवेद्यैता. शुचिराख्याय भूपतेः।
पूर्वोक्तप्रत्यवायाना प्रायश्चित्त मिदं स्मृतम्॥
ब्राह्मणाना प्रसादेन तीर्थेषु गमनेन च।
गोशतस्य प्रदानेन शुध्यन्ति नात्र सशय.।
अवभृथेव मेधस्य स्नात्वा शुद्धि मवाप्नुयात्॥
आख्याय नृपतेर्वापि तेन संशोधितः शुचिः।
महापापानि सर्वाणि कथयित्वा महीपतेः॥
निष्कृतिं तद्गिरा दद्या दन्यथा तेऽपि तत्समाः।
रोगार्ताङ्गं द्विज वापि मार्गे खेदसमन्वितम्॥
दृष्ट्वा कृत्वा निरातङ्कं ब्रह्मघ्नः शुद्धिमाप्नुयात्।

अर्जयातं धनं दत्त्वा विप्रेभ्यो वापि शुद्धति ॥
अरण्ये निर्जने यद्वा शुद्धेत् त्रिवेदसंहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुराप्तप्तां पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्यं वा पीत्वा मृतोऽपि शुद्धति ॥
यदि वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरां पुनः ॥
पुनः संस्कारकरणात् शुद्धेदाह पराशरः ।
स्तेयं कृत्वा सुवर्णस्य शुद्धमेव द्विजातयः ॥
समर्प्य मूषलं राज्ञः ख्यापये स्तेय कर्मकृत् ।
शक्तिञ्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिरं लगुडं वापि हन्यादेकेन तं नृपः ।
जीवतोऽपि भवेत् शुद्धो मुक्तो वा तेन पावनः ॥
मृतश्च मेत्य संशुद्धेत् पाराशरवचो यथा ।
न स्त्री मतिकृतं कृत्वा अग्निवर्णां च तां धमेत् ॥
गुर्वङ्गना गमन्तस्या लोहमय्यां तु स्थापयेत् ।
वृषणौ पुनरुत्कृत्य नैऋत्यामुत्सृजेत्तनुम् ॥
स मृतः शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृतिः ।
सम्वत्सरं चरेत् कृच्छ्रं प्राजापत्य मथापि वा ॥
चान्द्रायणं चरेद्वापि त्रीन् मासानि जितेन्द्रियः ।
व्रते तु क्रियमाणे वै विपत्तिः स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णयः ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावनं कुर्यात् चन्द्रव्रत समाहितः ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम्।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता॥
क्षत्रियं ब्राह्मणं हत्वा गवा दद्यात् सहस्रकम्।
वृषभैकेन संयुक्तां पापादस्मात् प्रमुच्यते।
त्रीणि वर्षाणि शुद्ध्यर्थं ब्रह्मघ्नस्य व्रतं चरेत्॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत्।
वैश्यं हत्वा द्विजश्चैव अब्दमेकं व्रतञ्चरेत्॥
गवां चैकशतं दद्याच्चरेच्चान्द्रायणानि च।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषा मनौ॥
दृष्ट वार प्रदुष्टा स्त्री चातुर्वर्ण्या द्विजातयः।
शूद्रहत्या व्रतं तेतु चरन्तः शुद्धिमाप्नुयुः॥
अनुलोमेन शूद्रं वा योषामव्यभिचारिणीम्।
शुद्धि मिच्छन्ति कवयश्चन्द्रवृत्तेन केचन॥
व्यभिचारात्तु ते हत्वा योषितो ब्राह्मणादयः।
दन्तिधनुर्वस्त्रं गवा क्रमाद्दद्युर्विशुद्धये॥
सास्थीनामनस्थीनाञ्च नरो हत्वा सहस्रकम्।
चीर्णेन शुद्धिमागच्छेत् योषा सत्या व्रतेन तु॥
गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं चोत् मर्षय।
यथा यथा विपत्तिः स्यात् तथा तथोपपद्यते॥
गोघाती पशुगव्याशी गोष्ठशायीच गोऽनुगः।
सयुक्तो मासमासीन गोप्रदानेन शुद्ध्यति॥
एकपादे तु लोमानि द्वये श्मश्रु निकृन्तयेत्।
पादत्रये शिखावर्जं सशिरं तु निपातिते॥
सशिख वपनं कृत्वा त्रिसन्ध्यमवगाहनम्।

असंख्यातं धनं दत्त्वा विप्रेभ्यो वापि शुद्धति ॥
अरण्ये निर्जने यद्वा शुद्धेत् त्रिवेदसंहिताम् ।
सुरापस्य प्रवच्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुराप्तप्तां पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्यं वा पीत्वा म्तोऽपि शुद्धति ॥
यद्दि-वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिवेद्विप्रो द्विजातिर्वा सुरां पुन: ॥
पुन: संस्कारकरणात् शुद्धेदाह पराशर: ।
स्तेयं कृत्वा सुवर्णस्य शुद्धमेव द्विजातय: ॥
समर्प्य मूषलं राज्ञ: ख्यापये स्तेय कर्मकृत् ।
शक्तिञ्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिरं लगुडं वापि हन्यादेकेन तं नृप: ।
जीवतोऽपि भवेत् शुद्धो मुक्तो वा तेन पावन: ॥
मृतश्च प्रेत्य संशुद्धेत् पाराशरवचो यथा ।
न स्त्री प्रतिकृतं कृत्वा अग्निवर्णां च तां धमेत् ॥
गुर्वङ्गना गमनस्तस्या लोहमय्यां तु स्थापयेत् ।
वृषणो पुनरुत्कृत्य नैऋत्यामुत्सृजेत्ततुम् ॥
स मृत: शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृति: ।
सम्वत्सरं चरेत् कृच्छ्रं प्राजापत्य मथापि वा ॥
चान्द्रायणं चरेद्वापि त्रीन् मासानि जितेन्द्रिय: ।
व्रतं तु क्रियमाणे वै विपत्ति: स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णय: ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावनं कुर्यात् चन्द्रव्रत समाहित: ॥

तिष्ठेन्मासं पयोऽशित्वा पराकं वा चरेद्व्रतम् ।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता ॥
चत्रियं ब्राह्मणं हत्वा गवां दद्यात् सहस्रकम् ।
वृषभैकेन संयुक्तां पापादस्मात् प्रमुच्यते ।
त्रीणि वर्षाणि शुद्धर्थं ब्रह्मघ्नस्य व्रतं चरेत ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत् ।
वैश्यं हत्वा द्विजश्चैव अब्दमेकं व्रतञ्चरेत् ॥
गवां स्त्र्येकशतं दद्याच्चरेच्चान्द्रायणानि च ।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषां मुने ॥
दुष्टकारं प्रदुष्टा स्त्री चातुर्वर्ण्या द्विजातयः ।
शूद्रहत्या व्रतं तेतु चरन्तः शुद्धिमाप्नुयुः ॥
अनुलोमेन शूद्रं वा योषामव्यभिचारिणीम् ।
शुद्धि मिच्छन्ति कवयश्चन्द्रव्रत्तेन केचन ॥
व्यभिचारात्तु ते हत्वा योषितो ब्राह्मणादयः ।
दत्तिधनुर्वस्त्र गवां क्रमाद्दद्युर्विशुद्धये ॥
साध्वीनां मनस्वीनाञ्च नरी हत्वा सहस्रकम् ।
चीर्णेन शुद्धिमागच्छेत योषा गत्वा व्रतेन तु ॥
गोघ्नस्यात प्रवक्ष्यामि निष्कृतिं शृणु मद्दंय ।
यथा यथा विपत्तिः स्यात तथा तथोपपद्यते ॥
गोघाती पञ्चगव्याशी गोष्ठशायीच गोऽनुग ।
मयुक्तो माससासीन गोप्रदानेन शुद्ध्यति ॥
एकपादे तु लोमानि द्वये श्मश्रु निकृन्तयेत् ।
पादत्रये शिखावर्ज सशिखं तु निपातिते ॥
सशिख वपन कृत्वा त्रिसन्ध्य मवगाहनम् ।

असंख्यात धन दत्त्वा विप्रेभ्यो वापि शुद्धति ॥
अरण्ये निर्जने यद्वा शुद्धेत् त्रिवेदसंहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुराप्तप्ता पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्य वा पीत्वा मृतोऽपि शुद्धति ॥
यदि वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरा पुन ॥
पुन. संस्कारकरणात् शुद्धोदाह पराशर. ।
स्तेय कृत्वा सुवर्णस्य शुद्दमेव द्विजातय ॥
समर्प्य मूषल राज्ञ ख्यापये स्तेय कर्मकृत् ।
शक्तिञ्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिर लगुड वापि हन्यादेकेन त नृप ।
जीवतोऽपि भवेत शुद्धो मुक्तो वा तेन पावन ॥
मृतश्च प्रेत्य संशुद्धेत् पाराशरवचो यथा ।
न स्त्री प्रतिकृतं कृत्वा अग्निवर्णा च ता धमेत् ॥
गुर्वङ्गना गमन्तस्या लोहमय्या तु स्थापयेत् ।
वृषणौ पुनरुत्कृत्य नैऋत्यामुत्सृजेत्ततम् ॥
स मृत शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृति ।
सम्वत्सरं चरेत् कृच्छ्र प्राजापत्य मथापि वा ॥
चान्द्रायण चरेद्वापि त्रीन् मासानि जितेन्द्रिय ।
व्रते तु क्रियमाणे वै विपत्ति स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णय. ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावन कुर्यात् चन्द्रव्रत समाहित ॥

तिष्ठेन्मासं पयोऽशित्वा पराक वा चरेद्व्रतम् ।
अनिर्दिष्टस्य पापस्य शुद्धिरेषा प्रकीर्तिता ॥
च'नयं ब्राह्मणं हत्वा गवा दद्यात् सहस्रकम् ।
वृषभैकेन सयुक्ता पापादस्मात् प्रमुच्यते ।
त्रीणि वर्षाणि शुद्ध्यर्थं ब्रह्मघ्नस्य व्रत चरेत् ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा चरेत् ।
वैश्य हत्वा द्विजस्वैव अब्दमेक व्रतञ्चरेत् ॥
गवा चैकशतं दद्याच्चरेच्चान्द्रायणानि च ।
कृच्छ्राणि वाचरेत् त्रीणि वचनाद्विदुषा मुनी ॥
दूह कार प्रदुष्टा स्त्री चातुर्वर्णा द्विजातयः ।
शूद्रहत्या व्रतं तेतु चरन्तं. शुद्धिमाप्नुयुः ॥
अनुलोमेन शूद्र वा योषामव्यभिचारिणीम् ।
शुद्धि मिच्छन्ति कवयश्चन्द्रवृत्तेन केचन ॥
व्यभिचारात्तु ते हत्वा योषितो ब्राह्मणादयः ।
दत्तिधनुर्वस्त्र गवा क्रमाद्दद्युर्विशुद्धये ॥
साध्वीना मनस्वीनाञ्च नरो हत्वा सहस्रकम् ।
चीर्णेन शुद्धिमागच्छेत योषा सत्या व्रतेन तु ॥
गोव्रध्यात प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हथ ।
यथा यथा विपत्ति, स्यात् तथा तथोपपद्यते ॥
गोघातो पञ्चगव्याशी गोष्ठशायीच गोऽनुग ।
सयुक्तो माममासीन गोप्रदानेन शुध्यति ॥
एकपादे तु लोमानि हये शस्त्र निकृन्तयेत् ।
पादद्वये शिरोवर्ज सशिरं तु निपातिते ॥
सशिख वपन कृत्वा त्रिसन्ध्य मवगाहनम् ।

गवां मध्ये वसेद्रात्रौ दिवा गा समनुव्रजेत ॥
तिष्ठन्तीभिश्च तिष्ठेत व्रजन्तीभि सह व्रजेत्।
पिवन्तीभिः पिवेत्तोयं संविशन्तीभिश्च संविशेत् ॥
शृङ्गकर्णादिसंयुक्तं चर्मोत् सत्यं तदाव्रतः।
विपैकं सुचरेद्भिक्षां स्वकर्म ख्यापयन् व्रती ॥
गोघ्नस्य देहि मे भिक्षां इति वाचमुदीरयेत्।
मासमेकं व्रतं कृत्वा गोप्रदानेन शुद्ध्यति ॥
चौरव्याघ्रादिकेभ्यश्च सर्वप्राणैः समुद्धरेत्।
गर्त्तप्रपातपङ्काच्च तथान्यादुपकारत ॥
भोजयेद्ब्राह्मणान् पश्चात् पुष्पधूपादिपूर्वकम् ॥
दद्याद्गाश्च द्विपञ्चैकं ततः शुद्ध्यति किल्बिषात्।
मुनयः केचिदिच्छन्ति विचित्रासु विपत्तिषु ॥
यथा सम्भवतस्तासु पृथक्पृथग्विनिष्कृतिम्।
श्रृङ्गवस्त्राश्ममृत्पिण्डयष्टिमुष्टिप्रघातनम् ॥
योक्त्रबन्धारणं रोधो बन्धनं विदाद्ग्नयः।
गर्त्तपङ्कप्रपातश्च वह्निव्याघ्रादिभक्षणम् ॥
क्षुत्तृड्रोगचिकित्सा च तथादिदोहवाहने।
मृत्युस्थानानि चैतानि गवामिति प्रबोधनम् ॥
प्रसूतात् पृथगेतेषु प्रायश्चित्तं पराशरः।
उपेक्षयाश्च पङ्कादौ तथोपविषभक्षणे ॥
वक्ष्यमाणक्रमेणैतत् शृणुध्वन्द्विजसत्तमाः !।
शस्त्रेण त्रीणि कृच्छ्राणि तदर्द्धं वासमाचरेत् ॥
अश्मना द्वे चरेत् कृच्छ्रे मृत्पिण्डे नास्ति कृच्छ्रकम्।
यष्ट्या च द्वे चरेत् कृच्छ्रे साक्षात् यष्ट्या तु ते चरेत् ॥

योक्त्रे च पादमेकन्तु तारणे पादमेव च ।
रोधने कृच्छ्रपादे द्वे कृच्छ्रमेकं तु बन्धने ॥
कूपपाते चरेत् कृच्छ्रमर्धं वाप्यां समाचरेत् ।
गोयक्षत्रिखण्डघाते च प्राजापत्यञ्चरेद्द्विजः ॥
क्षुत्तृट्रोगचिकित्सासु कृच्छ्रेण प्रेक्षणं चरेत् ।
पतितां पङ्कलग्नां वा अवलिप्ताञ्च यो नरः ॥
स्वस्य चान्यस्य चोत्प्रेक्ष्य सार्धकृच्छ्रं चरेच्छुचिः ।
एकश्चेद्बहुभिर्विद्वान् चेष्टिता चेन्मृयेत गौः ॥
पादं पादञ्चरेयुस्ते इति पाराशरोऽब्रवीत् ।
स्वबुधा योऽवलिप्ताङ्गीं पश्यन्तो नोपकुर्वते ॥
पातनोत्पेक्षणप्रोक्ताञ्चरेयुस्ते व्रतं नरः ।
या गर्त्तादौ विपद्येत चेष्टिता स प्रपत्य वा ॥
पातचेष्टितयोरुक्तं तत्कर्त्ता व्रतमाचरेत् ।
अज्ञया रज्जुदोषेण गौर्विपद्येत यस्य सः ॥
व्रतपादञ्चरेत् शुध्येत्किञ्चिद्दद्याच्च दक्षिणाम् ।
यो गामपालयन् दुग्धा इतिवा वाहयेद्वृषम् ॥
यदि म्रियेत तद्दोषात्तदा कृच्छ्रार्द्धमाचरेत् ।
ग्रासं यो ना क्षुधार्त्तस्य ह्यपार्तस्य न वा जलम् ॥
स्त्रीस्तस्य नरो दद्यात्स तत्पादव्रतञ्चरेत् ।
या तु बद्धा चिकित्सार्थं विशल्यकरणाय च ॥
औषधादिप्रदानाय विपन्ने नास्ति पातकम् ।
विद्युत्पाताग्निदाहाभ्यां कुल्ल्याश्च पतनादिभिः ॥
गोभिर्विपत्तिमापन्ने तत्र दोषो विपद्यते ।
पालस्य रक्षतोऽरण्ये व्याघ्रादिर्गां निपातयेत् ॥

अकुर्वतः प्रतीकारं कृच्छ्रार्धं तस्य पावनम्।
न्यस्यन् शून्येषु पालेषु तथान्यारण्यगामिषु॥
पाले सम्भाषयत्युच्चैर्हन्यात्तत्र न दोषभाक्।
गर्भिणीगर्भतुल्यातु तद्गर्भं न विशल्यत॥
यत्नतोऽपि विपद्येत तत्र दोषो न विद्यते।
गर्भस्य पातने पादं द्वौ पादौ गात्रसम्भवे॥
पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्।
अङ्गप्रत्यङ्गभूतेन तद्गर्भे चेतनान्विते॥
द्विगुणङ्गोव्रतं कुर्य्याद्देया गोघ्नस्य निष्कृतिः।
वस्त्रादिवासने गौश्च बालदामकदोषतः॥
पादयोर्बन्धने चैव पादोनं व्रतमाचरेत्।
घण्टाभरणघोषेण गौश्च बन्धनमाप्नुयात्॥
चरेदर्धव्रतं तत्र भूषणार्थञ्च यत् कृतम्।
गौश्चेन्नादावघाघ्नी स्यात् कुर्यान्नैव निष्कृतिम्॥
तदा गोरोमतुल्यानि नरकाण्यविशत्समाः।
यः ज्ञात्वा पापसम्भीतो विप्राराधनतत्परः॥
तदुक्तां निष्कृतिं कुर्याद्गत्वेना नाप्नुतेऽशुभम्।
अन्यत्प्राणिवधस्याय प्रवक्ष्यामि च निष्कृतिम्॥
गजादिवधशुद्ध्यर्थं यद्व्रतं याच दक्षिणा।
हस्तिनस्तुरगं हत्वा वृषभं चरमेव च॥
दृषापाद्याप्नुकं गुञ्जान्दद्याद्द्वयं यथाक्रमम्।
क्षणाङ्गोनिष्कृयन्दत्वा मरणोवधकान्नरः॥
तस्यातिनिष्कृतिं कुर्य्याद्वधशुद्धिमपेक्षया।
हंसं येन कपिं श्येनं जतस्य नग्निपपिण्डमम्।

भासञ्च हत्वा सुगीवः शुद्धो देयाः पृथक् पृथक्॥
हससारसचक्राह्व मयूरमद्गुकुक्कुटान्।
आटीपारावतक्रौञ्चशुकांश्च नक्तभोजनात्॥
येषां जन्मे वृषं दद्यात् प्रत्येकं शुद्धये द्विजः।
मनीषिणो वदन्त्येनां भार्यानां वधनिष्कृतिम्॥
क्रौञ्चसारसहंसाटिशिखिचक्राह्वकुक्कुटान्।
शुक टिट्टिभ मुद्गरो नक्ताशी नक्तदा शुचिः॥
पारावतकपोतप्रसारितित्तिचमापञ्चा।
त्रिसन्ध्यान्तर्जले प्राणान् आचम्य स्याच्छुचिर्द्विजः॥
काङ्क्षटमञ्च श्येनञ्च अनकथ्यालिपचिणस्।
हत्वा स्यादुपवासेन शुचिरात्र परापरः॥
मण्डोरिमुखक सर्वं हत्वागजरडिण्डिभौ।
शर्करभोजनन्दण्ड मायसे च ददन् शुचिः।
मेषञ्च शशकञ्चैव हत्वा कर्म च शल्यकम्।
वार्त्ताकुतृप्तरञ्जगधशोरौबोर्पणात् शुचिः॥
वृश्चिकान् जम्बुकान् हत्वा तरक्षु्श्चौ तथा द्विजः।
चिरात्रोषोषितः शुद्धो तिलप्रस्थमदानतः॥
द्विजः शाखामृगं हत्वा सिंह चित्रकमेव च।
हत्वा सप्तोपवासानि दद्याद्ब्राह्मणभोजनम्॥
महिषोष्ट्रगजाश्वानां हत्वा चान्यतमं द्विजः।
त्रिः स्नात्वाचोपवासेन शुद्धः स्याद्द्विजपूजनात्॥
वाराहं यदि वा रौद्रं हत्वा स्वगमकामतः।
अकालक्लिष्टभोजी सन्नक्तकैतेन शुध्यति॥
अथान्यत् संप्रवक्ष्यामि स्पर्शने दर्शनादिषु।

अभक्ष्यभक्षणादीच निष्कृति श्रोतुमर्हथ ॥
उदक्या ब्राह्मणी स्पृष्टा मातङ्गपतितेन च ।
चान्द्रायणेन शुध्येत द्विजाना भोजनेन च ॥
कापालिकादिनारीतु गत्वाऽ गम्यास्तथा पराम् ।
भुक्त्वा विप्रस्तदन्न स्याच्छुद्धिश्चन्द्रव्रतेन तु ॥
कामतस्तु व्रत कुर्यादुक्तस्त्रीगमनादिषु ।
चन्द्रव्रतद्वय शुद्धौ पराशरवचो यथा ॥
दुग्ध सलवण शक्तु सदुग्धं निशि सामिषान् ।
दन्तच्छिन्नान् सरुद्दृतान् पृथक्पावजलानपि ॥
योऽद्यादुच्छिष्टराज्य तु पीतशेषं जल पिबेत् ।
एकैकशो विशुध्यर्थं विप्रश्चन्द्रव्रतं चरेत् ।
वासासि यावतो यस्य पतन्ति जलविन्दव. ॥
तदपुण्य जलस्थानं नरकस्य शिलान्तिकम् ।
तत्र पीत्वा जल विप्र. आत्तस्तृट्परिपीडित ॥
तद्देनसो विशुद्ध्यर्थं कुर्य्याच्चान्द्रायणव्रतम् ।
नटी शैलुषिकीश्चैव रजकी वेणुजीविनीम् ॥
गत्वा चान्द्रायण कुर्य्यात् तथा चर्मोपजीविनीम् ।
गा इमश्चैव वैश्यश्च शूद्र वाश्यानुलोमजम् ॥
क्षत्रियादिस्त्रियं गत्वा विप्रश्चान्द्रायण चरेत् ।
ब्राह्मणान्न ददत् शूद्र शूद्रान्नं ब्राह्मणो ददत् ॥
द्वावप्येतावभोज्यान्नो चरेता शशिनो व्रतम् ।
विप्रेणामन्त्रितो विप्र. शूद्राहृतश्च योऽश्नुते ॥
उभयत्र पित्र्यभोक्तारौ शुद्ध्यतामैन्दवेन तु।
समानार्षा स यो गच्छेन्मातां तुष्ट सर्गोत्रजाम् ॥

मातुलस्य सुतायैव विप्रश्चान्द्रायणं चरेत्।
पीतशेषं जलं पीत्वा भुक्तशेषं तथा घृतम्॥
अथ मूत्रपुरीषे तु द्विजश्चान्द्रायणं चरेत्।
सूनादस्यास्य गोमांसं श्वाद्यादामद्यमकामतः॥
पीत्वा चन्द्रव्रतं कुर्य्यात् पावनं शुद्धिदं परम्।
प्राज्ञः सन् पञ्च यज्ञान् यो न कुर्वीत द्विजाधमः।
परपाकरतो नित्यं आत्मपाकविवर्जितः॥
प्रदाता च सदा लुब्धः सोऽपचः परिकीर्तितः।
द्विजस्तस्यान्नमश्नाति स कुर्यादैन्दवं व्रतम्॥
गणिकागणयोरन्नं यदन्नं बहु याचकम्।
सीमन्तोन्नयने भुक्त्वा द्विजश्चान्द्रायणं चरेत्॥
अजानन् यः समश्नीयात् पदस्थे द्विजाधमः।
सोऽभक्ष्यममश्नाति द्विजश्चान्द्रायणं चरेत्॥
महापातकिनामन्नं योऽश्नाद्दज्ञानतो द्विजः।
अज्ञानात्सकृच्छ्रं तु जानश्चान्द्रायणं चरेत्॥
प्रपातविषवह्न्यम्बुप्रवज्याधर्मवासकान्।
यथा हताश्च हन्ताश्च प्रत्यवसन्निकाः स्मृताः॥
केचिदेतद्विशुद्ध्यर्थमिच्छन्ति व्रतमैन्दवम्।
दक्षिणां सद्यतां गाश्च दद्युश्च द्विजभोजने॥
ग्रहहारेऽतियो मासे तस्याद्रस्यामश्नुते।
तदन्नमभोज्यं स्यादभुक्त्वा चान्द्रायणं चरेत्॥
सद्यच्छस्य दर्भो यो ब्राह्मणः समुपस्पृशेत्।
अधकूपानेन तत्तुल्यं पीत्वा शशिव्रतं चरेत्॥

अभक्ष्येण हि तत्तुल्यं चरेच्चान्द्रायण व्रतम् ॥
आसनारूढपादः सन् वस्त्रस्यार्द्धपटे स्थितम् ।
मुखेन धर्मिणे भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥
उद्धृत्य वामहस्तेन यत्किञ्चित् पिबते द्विजः ।
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत् ।
अश्नीयात् येन स्पृष्टेन उच्छिष्टं चाशुचिं द्विजः ॥
चरन् चान्द्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि वा द्विजः ।
चान्द्रायणं नवश्राद्धे पराकौ मासिके यथा ॥
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके ।
स्नानं मन्त्रेषु कुर्वीत प्राणायामञ्जपन् तथा ॥
स्वैरिणीनाञ्च पुनर्भुवाञ्च य कामचारी द्विजयोषिताञ्च ।
गोष्ठता पाकमना यद्याद्विप्रः स चन्द्रव्रतकृच्छ्रचिः स्यात् ॥
वेश्मन्यज्ञातचाण्डालो द्विजाते यदि तिष्ठति ।
ब्रह्मकूर्चं चरेन् मासान्वि स्नायी नियतेन्द्रियः ॥
स्नेहाश्च घृततैलादीन् वस्त्राणि स्वासनानि च ।
बहिः कृत्वा दहेद्गेहं सशुद्धो भोजयेद्द्विजान् ॥
गोविंशति तपस्वैकस्तेभ्यो दद्याच्च दक्षिणाम् ।
द्रमं हि निष्क्रय ब्रूयु चन्द्रव्रतस्य केचन ॥
अस्य पापस्य शुद्ध्यर्थं चरेद्वा सौन्दवं व्रतम् ।
द्रमं वा निष्क्रयं दद्यात् प्रत्येकं कवयोविदुः ॥
महापातकशुद्ध्यर्थं सर्वनिष्कृतये नरैः ।
नृपग्रामेशविदितैः कुर्वाणैः शुद्धिराप्यते ।
सुरामूत्रपुरीषाणां लीढ्वा त्वकामकामतः ।
पुनः संस्कारकरणात् शुद्धेरादृ पराशरः ॥

अभक्ष्यभक्षणे विप्र तथैवापेयपानकृत्।
व्रतमन्यत् प्रकुर्वीत वदन्त्यन्ये द्विजोत्तमाः।
कुशाजाखल्वपालाशबिल्वोदुम्बरवारिणाम्।
पानेन ज्ञायते शुद्धिः षड्रात्रेण न संशयः॥
द्रौण्यम्बुक्षीरकुम्भाभस्तृष्टं क्षेत्रवारि च।
पीत्वारण्ये प्रयातोऽथ पञ्चगव्यं पिबन् शुचिः॥
भाण्डस्थितमभोज्यानां पयो दधि घृतं पिबन्।
द्विजातिः क्षपवासेन शूद्रो दानेन शुध्यति॥
तप्तोयपीतजीर्णाद्य तप्तकृच्छ्रं चरेद्द्विजः।
सर्वे ते तु जले सद्यः प्राजापत्यं समाचरन्॥
रजकाद्यम्बुपाने तु प्राजापत्यं समाचरेत्।
वान्ते जले तदर्थं तु शूद्रः स्यात् पादकृच्छ्रकृत्।
चलत्कूपकाद्यम्बु पीत्वा शुद्धा द्विजातयः।
गोमूत्रयावकाहाराः शुध्येयु दिवसैस्त्रिभिः॥
घृतं दधि तथा दुग्धं गोष्ठेषु यौवसूतके।
अभिचारस्य तद्भुक्त्वा भुक्त्वा वा शूद्रभोजनम्॥
द्रण्डदा वा द्विजो भुक्त्वा मानसोऽथ्यामथापि वा।
क्षुधातिपीडितैः पेयमित्याहैतत् पराशरः॥
सूतकान्नं द्विजो भुक्त्वा त्रिरात्रोपोषणाच्छुचिः।
तोयपाने त्वसौ कुर्यात् पञ्चगव्यस्य प्राशनम्।
द्रोण्योदकं तदर्धं वा द्रव्यं प्रस्थार्धमेव च॥
एतच्छुचिरसंस्पृष्टं प्रोक्षणाच्छुचितामियात्।
षट्पकं घृतं पक्वं सर्वं काकाद्युपाहतम्॥
तद्पामः स्नानसम्मार्गात्पूतं हेम्याम्बुमज्जनात्।

केचिद्वदन्ति तज्ज्ञास्तु तस्याग्निनावचूडनम् ॥
केचित् प्रणवयुक्तेन वारिणा प्रोक्षणं विदुः।
केशकीटकसंदुष्टं अन्नं मक्षिकयापि च ॥
स्कन्दस्य वाद्भिर्वा तत्र प्रक्षेप्यं विशुद्धयेत्।
उदक्या ब्राह्मणी स्पृष्टा क्षत्रियापि ह्युदक्यया ॥
अर्द्धकृच्छ्रं चरेत् पूर्वं तद्वदपरा चरेत्।
प्राजापत्यं च विट्स्पृष्टा विट्स्त्री पादमाचरेत् ॥
शूद्रा स्पृष्टाचरेत् कृच्छ्रं शूद्री दानेन शुद्ध्यति।
ब्राह्मण्या ब्राह्मणी स्पृष्टा उदक्योदक्यया च ते।
चरेतां पादकृच्छ्रे द्वे स्नाने विशुद्ध्यति ॥
ब्राह्मणी क्षत्रिया स्पृष्टा ब्राह्मणीव्रतमाचरेत्।
अपरा क्षत्रियायास्तु वक्तव्यमेव मन्ययोः ॥
रजस्वला तु संस्पृष्टा श्वभिश्शूद्रैश्च वायसैः।
स्नानं यावन्निराहार पञ्चगव्येन शुद्ध्यति ॥
ब्राह्मण्युदक्या संस्पृष्टा मातङ्गैर्मेदभिल्लकैः।
गोमूत्रयावकाहारा षड्रात्रेण च शुद्ध्यति ॥
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा द्विजातिस्त्रीरजस्वलाम्।
प्राजापत्येन सशुद्ध्येत् चीर्णकृच्छ्रेण वा पुनः ॥
वदन्ति कवयः केचिदेतद्दोषविशुद्धये।
प्राणायामशतञ्चास्य पञ्चगव्यस्य प्राशनम् ॥
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा ब्राह्मण्युदक्यया चरेत्।
प्राजापत्यञ्च गायत्री मयुतं नियमं सकृत् ॥
क्षत्रियाद्भिरेतस्य स्पर्शने व्रतमाचरेत्।
अनुच्छिष्टस्य तत्स्पर्शे स्नानकर्म यतः स्मृतम् ॥

रजकादिकसस्पर्शे द्विजन्मोदक्ययोषित ।
प्राजापत्यञ्चरेद्विप्रा अन्यायरेसुरश्नत ॥
उदक्या ब्राह्मणी गत्वा क्षत्रियो वैश्ययेव,च ।
त्रिरात्रोपोषित. प्राश्य गव्यमाज्य शुचिर्भवेत् ॥
क्षत्रियाचैव वैश्या च श्वान गत्वा तु कामत ।
चरेत् सान्तपन विप्रस्तत्पापस्य विमोचकृत् ॥
वैश्यास्र क्षत्रियो गत्वा वैश्यश्च शूद्रिणी तथा ।
प्राजापत्यञ्चरेत् मासं इति ब्रूयात् पराशरः ॥
उच्छिष्टा ब्राह्मणी स्पृष्टा शुना वा श्वपचेन वा ।
शुद्धा भवति सा तावत् यावन पश्यति शीतगुम्॥
विप्रामश्वजनो वेश्या महिष्युष्ट्रीमजा खरीम् ।
प्राजापत्यञ्चरेद्गत्वा ह्येकैकस्य विशुद्धये ।
शूद्रीन्तु ब्राह्मणो गत्वा मास मासार्द्धमेव च ।
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति ॥
तयो॰प्यश्वजनो गत्वा प्राजापत्य समाचरेत् ॥
वैश्यपत्नीमसौ गत्वा कृत्वा सान्तपन शुचि ।
शूद्रीन्तु क्षत्रिया गत्वा गोमूत्रयावकाशन ॥
दशभिर्दिवसै शुद्ध्येत् वैश्य साऽप्येवमेव हि ।
उत्तमागमने नार्यां सर्वे ते स्यु कटाग्निना ॥
महापथचर ब्राह्म चरयानेन योषित ।
चण्डालमेदभिल्लानामभिगम्य स्त्रियं नर ॥
शुद्ध्येत्त्रयोव्रत कुर्वन् मासार्द्ध मघमर्षणम् ।
पतिता च द्विजाग्र स्त्री प्राजापत्यञ्चरेद्द्विज ॥
तैलिकस्य स्त्रियं गत्वा गत्वा मद्यकृत स्त्रियम् ।

अन्त्यानामभिगतः स्त्रीणां पुंसामनुलोमजेन तु ॥
इमा निष्कृतिमिच्छन्ति हतयोनिञ्च केचन।
पितृव्यमातृभार्य्यां च मातृष्वसारमेव च।
भगिनीञ्चैव धात्रीञ्च गत्वा कृच्छ्रं समाचरेत्॥
षण्मासं केचिदिच्छन्ति इमा गत्वा विशुध्यति।
कृच्छ्रं धर्मविदो विप्राः शुद्धितत्वार्थवेदिनः॥
गुरुपत्नीं द्विजो गत्वा मातृष्वसृदुहितृषु।
क्षिपेत् शुद्ध्यर्थमात्मानं सुसमिद्धे हुताशने॥
उपाध्यायनृपाचार्य्यशिष्ययोषिद्गमी नरः।
षण्मासात् कृच्छ्रचरणात् शुद्ध्येदाह पराशरः।
क्षतचाण्डालसस्पर्शः क्षतम् नकरो द्विजः॥
षड्रात्रोपोषणात् शुद्ध्येत् भुक्त्वाचान्तो भवेत् शुचिः।
उच्छिष्टस्य संशुद्ध्यै केचित्प्राजापतिव्रतम्॥
पराक पञ्चगव्यञ्च केचित् ब्रूयुर्मनीषिणः।
उच्छिष्टं ब्राह्मणः स्पृष्ट्वा उच्छिष्टेन द्विजेन तु॥
आचम्यैव तु शुध्येतां विष्णुनामानि कीर्त्तनात्।
क्षत्रियेण तु सस्पृष्टो ब्राह्मणो नक्तभोजनात्॥
वैश्येन तु च सस्पृष्टो नक्ताशी पञ्चगव्यपः।
शूद्रेण तु च सस्पृष्ट एकरात्रोपवासकृत्॥
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति।
उच्छिष्टः शूद्रसंस्पृष्टः शुना वापि द्विजोत्तमः।
उपोष्य पञ्चगव्येन शुद्धिः स्यादपरे विदुः॥
अनुच्छिष्टोऽपि यत्स्पर्शात् स्नाति वर्णो विशुद्धये।
उच्छिष्टस्तस्य सस्पर्शे चरेत्प्राजापतिव्रतम्।

रजकाद्यन्त्यजस्पृष्टः शुद्ध्यै तदर्धमाचरेत्।
ब्राह्मण्युदक्या कृच्छ्रेण प्राजापत्येन चापरे॥
उदक्या ब्राह्मणी स्पृष्टा मृताङ्गपतितैर्न वा।
तावत्तिष्ठेन्निराहारा स्नात्वा काले न शुद्ध्यति॥
उदक्यासूतकाशौचस्पर्शेऽस्तमिते रवौ।
अन्नदानादिधर्मेण शुद्ध्येत् द्विजोऽग्निसन्निधौ॥
वन्दयित्वा पवित्रत्वं मन्दाकैरश्मिवायुभिः।
मुनयो धर्मवेत्तारो रात्रौ चन्द्राशुरश्मिभिः॥
समिद्भ्य ब्राह्मणा प्राश्य षडह पञ्चगव्यकम्।
हेम्नो दद्यु पण्मासात्तया गाश्च विशुद्ध्यति॥
पञ्चाहेन नृपः शुध्येत्तथा हेम दद्य गाम्।
चतुर्थाहेन वैश्यस्तु चतुर्मासान् गवा सह॥
त्र्यहेण च चतुर्थेन तस्माञ्च तयञ्च गाम्।
सङ्करप्रातकृते स्नान मेतदाह पराशर॥
पङ्क्ति निःसार्य विप्रस्या कामतोऽकामतोऽपि वा।
गायत्र्या च सहस्रेण जप्येन तु भवेच्छुचिः॥
य कश्चिद्धरते भूमिं हेम गामश्वमेव वा।
स त यत्नात्प्रदाप्योऽपि तद्वत् शुद्धिमाप्नुयात्॥
चाण्डाल भुक्ते वापि तेन सशोधितः शुचिः।
द्रव्यदण्डादिमुक्तिर्वा तपसा वा शुचिर्नरः॥
निराहारा जायते च एतदाङ्गिर्मनीषिणः॥
विनिर्गता यदा शूद्रादुदक्यान्ते व्यवस्थिता।
तदा द्विजैस्तु द्रष्टव्य इति धर्मविदो विदुः॥
दुःस्वप्नदर्शने चैव वान्तो वा [illegible]

मैथुने कूटधूमे च सद्य स्नानं विधीयते ॥
चिताञ्च चितिकाष्ठञ्च यूप चाण्डालमेव च ।
स्पृष्ट्वा देवलकश्चैव सचैल जलमाविशेत् ॥
जम्बुकश्च शूकरैस्तु यदि स्पृष्टो भवेन्नर: ।
अष्टोत्तरशत जप्त्वा गायत्र्या शुद्धिमर्हति ॥
शुनोघ्राणावलीढस्य नखैर्विलिखितस्य च ।
अद्भि:प्रक्षालन कार्य्य मग्निना वावधूननम् ॥
अवस्थान्त्यगुरौ स्नात्वा नक्त तस्य तु भोजनम् ।
नक्षत्रदर्शन त्वन्ये इति प्राह पराशर: ॥
कुमारी तु शुना स्पृष्टा जम्बुकेन वृषेण वा ।
या दिशं व्रजते सूर्य्ये ता दिश सा विलोकयेत् ॥
दिवसे तु यदा ग्रामे शुना स्पृष्टो भवेद्द्विज. ।
विप्र प्रदक्षिणीकृत्य घृतं प्राश्य विशुध्यति ॥
चातुर्वर्ण्यास्तु या नारी सुताभिगमनापि च ।
प्रक्षाल्य नाभि यावत्तत् लिङ्गशौच निजं विदु ॥
अभिगच्छन् सुतार्थञ्च ऋतावृतौ स्त्रियं द्विज ।
न च कुर्वीत स स्नानं नाभेरधस्तु शोधयेत् ॥
तुङ्कारन्तु गरीयस्त्वा उङ्कारन्तु गरीयसम् ।
प्रसाद्यैतावेनश्चेत्तस्मात् स्नात्वा शुद्धो द्विजोत्तम ।
विवादे शास्त्रतोजित्वा भार्या यस्य तु जायते ॥
श्मशाने जायते तस्य तमोभावेन दुष्कृतम् ।
ताडयित्वा तृणेनापि स्कन्धेनाथव्य रज्जुना ॥
विवादेनापि निर्जित्य तं प्रसाद्य विशुध्यति ।
उल्लीय च चरेत् शङ्कु मतिकृच्छ्र निपातने ॥

कृच्छ्रातिकृच्छ्रोऽसृक्पाने कृच्छ्रोऽस्यान्तरगोचिते ।
प्रेत दृष्ट्वा च दग्ध्वा च शुद्धिः स्नानात् द्विजन्मनाम् ।
उपवासमयो वापि ब्रह्मकूर्चञ्च पावनम् ।
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ॥
नीयते ह्यनुगच्छन्तु त्रिरात्रं अशुचिर्भवेत् ।
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ।
अङ्गुल्या दन्तकाष्ठन्तु प्रत्यक्षलवणं यथा ॥
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणम् ॥
कृत्वान्यतममेतेषां शुध्यर्थं मात्मनो हितम् ।
चरेत् शशिव्रतं विप्र इति प्राहुर्मनीषिणः ॥
केचिद्वदन्ति मुनयः कृच्छ्रं प्राजापतिं तथा ।
तदर्धं पादकृच्छ्रं वा ब्रूयुरन्ये द्विजोत्तमाः ॥
अथोच्छिष्ट द्विजोऽज्ञानाद्यद्यदद्यं हि किञ्चन ।
भुक्त्वा नाचम्य वा कुर्यात् विण्मूत्रं केह निष्कृतिः ॥
नक्तोपवासवाह्ने तु अन्यत्र द्विगुणञ्चरेत् ।
अष्टोत्तरशतं जप्त्वा गायत्र्याः शुद्धिमर्हति ॥
अथोच्छिष्ट द्विजः स्पृष्ट्वा स्वोच्छिष्टं श्वपचेन तु ।
नक्षत्रदर्शनेऽश्नीयात् पञ्चगव्यपुरःसरम् ॥
अथोधोच्छिष्टं विप्राद्यैश्चोच्छिष्ट शूद्रं स्पृशः ।
उपवासेन शुध्येयुः पञ्चगव्यस्य पावनम् ॥
श्वकाकीकाकसंस्पृष्टो भुञ्जानो ब्राह्मणश्च यः ।
तदन्नस्य परित्यागात् कृत्वा स्नानन्तु शुद्ध्यति ॥
यज्ञोपवीतेन विना भोजनं कुरुते द्विजः ।

अपि मूत्रपुरीषे वा रेत सेवनमेव च ॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रन्तु भूमिप ।
अहोरात्रोषितो वैश्य शुद्धिरेषा पुरातनी ॥
विप्रः कुकृत्यनिष्ठीव्य कृत्वाऽनृतभाषणम् ।
वचन पतिते. कृत्वा दक्षिणं श्रवण स्पृशेत् ॥
विप्रस्य दक्षिणे कर्णे नित्य वसति पावकः ।
अङ्गुष्ठे दक्षिणे पाणौ तस्मात्तेन च त स्पृशेत् ॥
प्रेक्षण शशिनोऽर्कस्य ब्रह्मेशविष्णुसंस्मृतिम ।
गायत्र्या शतसाहस्र सर्वपापहरं स्मृतम् ॥
गायत्र्यष्टसहस्र तु ब्रह्महत्याविशोधनम् ।
शूद्रवधे द्विजाग्रस्य गायत्र्यष्टसहस्रकम ॥
राज्ञ पञ्चसहस्राणि स्याद्विजस्य तदर्धकम् ।
योगेन गतिशीलस्तु यदि वा स्यात्सदा नर ॥
ता वुभौ सर्वदा त्याज्यौ निश्चितं सर्वकर्मसु ।
मक्षिकासन्ततिर्धारा विप्रुषो ब्रह्मबिन्दव ॥
स्त्रीमुख वालवृद्धञ्च न दूष्यन्ति कदाचन ।
आत्मस्त्री स्यात्मबालश्च आत्मवृद्ध तथैव च ॥
आत्मन. शुचयस्तानि परेषा मशुचि स्तथा ।
उत्पन्नमातुरे स्नानं दशकृत्वो ह्यनातुर ॥
स्नात्वा स्नात्वा स्पृशेदेन तत. शुद्धेत्स आतुर ।
विवाहोत्सवयज्ञेषु संग्रामे जनसङ्कुले ॥
पलायने वनेऽरण्ये स्पृष्टास्पृष्टिर्न दूष्यति ।
आद्यसर्गे भवेत् स्नानं द्वितीयस्यापि तन्मतम् ॥
शिर प्रोक्षणमन्येषा मन्यताचमन स्मृतम् ।

पनायशगिपाकाटदलधावनस्तरः ॥
दिवा कीर्तिं समश्नीयाद्ग्रावन्ना नैव पश्यति।
पश्चाश्मलोहं फलकाष्ठचर्म भाण्डस्तथैव स्वयमेव शौचात्।
पुंसां निशाश्व.ऽकनि:स्रवानां स्त्रीणां च शुद्धिर्विहिता सदैव॥
स्नानस्पृष्टेन येन स्यात्काष्ठाद्यैर्यदि तं स्पृशेत्।
नावागेहवत् स्पृशम्, तदोपस्पर्शनाच्छुचिः॥
म्लेच्छलूनाशनस्पर्शे चैते वा यदि वा स्वके।
उपस्पर्शं शिरः प्रोच्य संशुद्धो जायते द्विजः॥
वस्त्रसस्पर्शेन तस्य सचैलाद्वाऽवगाहनम्।
अङ्गस्पर्शनवत्तस्य वन्दति द्विजसत्तमा.॥
चण्डालोदकसंस्पर्शे शुद्धिः स्नानेन जायते।
तथा तद्भाण्डसस्पर्शे स्नानमाहुर्मनीषिणः॥
उदक्यास्पर्शने स्नायादशक्तेनाङ्गतोऽपिवा।
स्याद्यतः स्पृश्यपि स्नानं तुल्याः सर्वरजस्वलाः॥
सस्पर्शे भेदभिन्नाना तथैव ब्रह्मघातिनाम्।
पतितानां च सस्पर्शे स्नानमेव विधीयते॥
रजस्वलाद्यै. सस्पर्शे उपस्पर्शनमेवच।
उदक्यायास्तृतीयेऽह्नि केचिदाचमनं विदु.॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थे तु विशुद्ध्यति॥
पुरुहूतः पुरा दैत्य त्रिशिर्षाह्वमघान यत्।
तद्वध, ब्रह्महत्यायास्तत्फलं स ददौ स्त्रियम्॥
आसां तत्प्रभृति स्त्रीणामस्पृश्यत्व समाभवत्।
चर्चा दिनत्रय चैतच्छक्रगुर्वादिकल्पितम्॥

शबराश्च पुलिन्दाश्च नटाश्च कैवटास्तथा ।
एतान्रजकसन्तुल्यान् केचिदाहुर्मनीषिणः ॥
रजकाद्यभिगामित्वे वैश्यो गोमूत्रयावकम् ।
चरन्ति षड्गुणाद्दोभिः कृच्छ्रं वा द्विगुणश्चरेत् ॥
ब्रह्मक्षत्रियविट्जाता शूद्रास्तेऽनुक्रमेण तु ।
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसम्भवः ॥
भोज्याशनास्तु तच्छूद्रा अन्ये भोज्यासनाः स्मृताः ।
आमाशनानि भोज्यानि हृतमुच्छिष्ट मुच्यते ॥
दासनापितगोपाल कुलमित्रार्द्धसीरिणः ।
भोज्यान्नो नापितश्चैव यश्चात्मानं निवेदयेत् ॥
पर्युषित चिरस्थञ्च भोज्य स्नेहसमन्वितम् ।
यवगोधूमावस्नेहो तथा गोरसविक्रयः ॥
आपद्गतो द्विजोऽश्नीयात् गृह्णीयाद्वा यतस्ततः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥
स्थापित शूद्रगेहेऽन्नकूट् पक्वञ्च यद्भवेत् ।
नीत्वा नद्यादिके तद्वै प्रोक्ष्य भुञ्जन्नकिल्विषी ॥
गायत्र्योङ्कारपूताभिः केचिदद्भिश्च प्रोक्षणम् ।
मन्यन्ते विष्णुमन्त्रेण कलिधर्मसमाः स्मृताः ॥
आममांसं घृतं क्षौद्रं स्नेहाद्य फलसम्भवाः ।
म्लेच्छभाण्डस्थिता दोषे निष्क्रान्ताः शुचयः स्मृताः ॥
आभीरभाण्डसंस्थानि पयोदधिघृतानि च ।
तावत्पूतं हि तद्भाण्ड यावत्तत्र तु तिष्ठति ॥
पूतानि सर्वपुष्पाणि फाकचर्म्मस्थितानि च ।
म्लादत्तानि च भक्ष्याणि पवतानु द्विजातिभिः ॥

सर्वैः स्वोपस्करैर्युक्ता शय्या रक्तांशुकानि च ।
पुष्पाणि चैव शुध्यन्ति प्रोक्षणान्नि न संशयः ॥
अलेपं स्वणय भाण्डं भाण्ड समयमेव च ।
प्रोक्षणादेव शुध्येत सलेप मग्नितांडनात् ॥
भग्नाना शुध्यति कामं कुर्याश्च न लिप्यते ।
सुरा मूत्रपुरीषाभ्यां शुध्येत तापलेपनैः ॥
अलिप्तं मद्यमूत्राद्यै स्नात्वा मन्त्रेन शुध्यति ।
रजसा स्त्री मनोदुष्टा नदाथ वेगसंयुता ॥
अवेगमपि यद्भूरि सरिद्वारि ह्रदश्च यत् ।
सकृदस्पर्शसंस्पृष्टं न तद्दूष्यन्ति सज्जिर ॥
सत्येन शूयते वाणी धर्मः सत्येन वर्तते ।
तस्मात्सत्यं हि वक्तव्यमात्मशुद्धै द्विजातिभिः ॥
रथ्याकर्दमतो यानि नावः पथि तृणानि च ।
मारुतार्केण शुध्यन्ति निशि चन्द्रर्क्षमारुतैः ॥
यथात्मत्र सुक्तानि प्रायश्चित्तानि सत्तम ।
उक्तानुक्तानि सर्वाणि ज्ञातव्यानि द्विजातिभिः ॥
प्रायश्चित्तं न तत्प्रोक्तं धर्मशास्त्रप्रदर्शिभिः ।
द्विजैस्तत्र प्रकल्प्यं स्याद्धर्मशास्त्रार्थचिन्तकैः ॥

क्ता मया निष्कृतयः समासात्मशुद्धये वर्णचतुष्टयस्य ।
तानि तासा विहितानि यानि वक्ष्याम्यतस्तानि निबोधयेति॥

इति श्रीदृढत्यारायणीये धर्मशास्त्रे सुव्रतप्रणीते प्राय-
त्तनिर्णयो नाम षष्ठोऽध्याय ॥ ६ ॥

## सप्तमोऽध्यायः ।

व्रतान्यथ प्रवक्ष्यामि चान्द्रादिक्रमेण तु ।
पापचर्यकृतैर्यैः स्यात्धर्मार्थौ च महोदय ॥
चन्द्रवृद्ध्याभिरादूग्रासान् शुक्ले कृष्णे च ह्रासयेत् ।
चन्द्रक्षयेन बोकर्थं मार्थे प्रयतश्चरेत् ॥
विपरीतान् क्रमाद्ग्रासानादावादौ च ग्रासयेत् ।
वर्धन्ते दैन्यपक्षे तु पिपीलीमध्यमैन्दवम् ॥
अष्टावष्टौ समश्नीयात् व्रती प्रतिवासरम् ।
अष्टाग्रासिकमित्येव चान्द्रायण मथापरम् ॥
शतद्वयन्तु पिण्डानां चत्वारिंशत्समन्वितम् ।
मासेनैवोपभुञ्जीत चान्द्रायण मथापरम् ॥
चतुरः प्रातरश्नीयात्सायं ग्रासाश्च तावता ।
शिशुचान्द्रायणं तज्ज्ञैः प्रोक्तं पापापनोदनम् ॥
मध्यन्दिने वदश्नीयात्सायं ग्रासांश्च तावता ।
चान्द्रायणं यतीनां तत्तत्त्वज्ञैः परिकीर्तितम् ॥
त्रिखण्डसम्मितान् ग्रासान् चन्द्रव्रतप्रयोजने ।
दीप. स्यादन्यथाभावे तस्मादुक्तं न दापयेत् ॥
एकभुक्तैश्च नक्तैश्च तथैवायाचितैरपि ।
उपवासैश्चतुर्भिश्च कृच्छ्र षोडशभिर्दिनैः ॥
उष्णं जलं पयः सर्पिरेकैकस्य त्र्यहं पिबेत् ।
वायुभक्षस्त्र्यहं तिष्ठेत्तप्तकृच्छ्रोऽय मुच्यते ॥
पलमेकं जलं पीत्वा पलमेकं तथा पयः ।
पलमेकं तथाज्यस्य मानमेतत्प्रकीर्तितम् ॥

एतत्तु त्रिगुणं प्रोक्तं महासान्तपनं स्मृतम्।
प्राजापत्यस्य कृच्छ्रस्य पराकस्त्रिगुणो महान्॥
पद्मोदुम्बरराजीव बिल्वपत्र कुशोदकम्।
प्रत्येकं प्रत्यहं मांस पर्णकृच्छ्रः प्रकीर्त्तितः॥
त्र्यहेण प्रत्यहं गव्यं सत्त्वं मूत्रं पयो दधि।
घृतं कुशोदकं पीत्वा उपवासश्च सप्तमः॥
एभिः समागतैरुक्तं दिव्यं सान्तपनं द्विजैः।
सप्ताहेन तु कृच्छ्रोऽयं मुनिभिः परिकीर्त्तितः॥
एतत्तु त्रिगुणं तज्ज्ञैर्महासान्तपनं स्मृतम्।
प्राजापत्यस्य कृच्छ्रस्य पराकस्त्रिगुणो महान्॥
एकभुक्तञ्च नक्तञ्च यथाचितविशेषणे।
पादकृच्छ्रोऽयमुद्दिष्टस्त्रिघ्न प्राजापतिव्रतम्॥
त्र्यहमेवातिकृच्छ्रः स्यात्पाणिपूतान्नभोजनः।
कृच्छ्रातिकृच्छ्रपयसा दिवसानेकविंशतिम्॥
दिनैर्द्वादशभिः प्रोक्तं पराकं समुपोषितैः।
एकत्र्यहत्र्यहादीनि नक्तञ्चैव यथा स्मृतम्॥
सम्प्राप्य तिलपिण्याकं तक्रं तोयं कुशोदकान्।
पञ्चमे तूपवासः स्यात्सौम्यकृच्छ्रोऽय मुच्यते॥
चान्द्रायणे च कृच्छ्रे च त्रिकालं स्नानमाचरेत्।
स्नानद्वयन्तु कर्त्तव्यं व्रतेष्वेवापरेषु च॥
शक्तिं ज्ञात्वा शरीरस्य स्नानं कार्य्यं तथा व्रतम्।
असामर्थ्येन कार्य्यञ्च याच पर्षत्त्वनुग्रहम्।
ब्रह्मकूर्च्चं प्रवक्ष्यामि व्रतानामुत्तमं व्रतम्॥
कृतेन येन मुच्यते प्राणिनः सर्वकिल्बिषैः।

नीलिकायास्तु गोमूत्रं कृष्णायाः शकृदुद्धरेत् ॥
पयश्च ताम्रवर्णायाः पीतायाश्च तथा दधि ।
कपिलायाः घृतञ्चैव महापातकनाशनम् ॥
अभावे सर्ववर्णानां कपिलायाः समुद्धरेत् ।
पलानि पञ्च मूत्रस्य अङ्गुष्ठार्धन्तु गोमयम् ॥
क्षीरं सप्तपलं ग्राह्यं दध्नः पलत्रयं तथा ।
घृतं चाष्टपल ग्राह्यं पलमेकं कुशाम्भसः ॥
मन्त्रैः सर्वाणि चैतानि अभिमन्त्र्याथ मिश्रयेत् ।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति वै क्षीरं दधिक्राव्णस्तथा दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
निष्पन्नं पञ्चगव्यञ्च पात्रैः क्रमेण तत्पिबेत् ।
मध्यमेन पलाशस्य तत्पत्रेण पिबेद्द्विजः ॥
द्वितीयं पद्मपत्रेण ब्रह्मपत्रेण चापरम् ।
चतुर्थं ताम्रपात्रेण तत्पिबेद्व्रतकृद्द्विजः ॥
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ।
उद्धृत्य प्रणवेनैव तत्पिबेत्प्रणवेन तु ॥
विष्णुं संस्नापयेद्भक्त्या पञ्चगव्येन चार्चयेत् ।
कूष्माण्डैर्जुहुयान्मन्त्रैः पञ्चगव्यं हुताशने ।
सव्याहृत्या च गायत्र्या तथैव प्रणवेन च ॥
ब्रह्मकूर्चमिदं प्रोक्तं व्रतं पञ्चदिनात्मकम् ।
पञ्चगव्यञ्च सम्प्राश्य पञ्चरात्रोपवासकृत् ।
नक्तेन वासमश्नीयाद्यावच्छक्त्या दिनानि च ।
पञ्चाहिकस्पारणकं ब्रह्मास्य प्रकीर्तितम् ॥

निर्दहेत्सर्वपापानि ब्रह्मकूर्चमिति स्मृतम्॥
अन्ये वदन्ति कवयः उपवासं विना व्रतम्॥
जप्य होमंच कर्त्तव्यं देवतार्चनमेव च।
पञ्चगव्यञ्च होतव्यं पञ्चगव्यं समश्नीयात्॥
ब्राह्मणान् भोजयेत्तावद्यावत्कुर्यादिदं व्रतम्।
त्वगस्थिगतं पापं तिष्ठते पुरुषस्य च॥
ब्रह्मकूर्चो दहेत् सर्वं समिद्धाग्नि रिवेन्धनम्।

यानीह पापानि भवन्ति पुंसां दैवादकामादथ कामतोवा।
उक्तानि तेषां मुनिना व्रतानि शुद्ध्यर्थमेतान्यपराणि चैवम्॥
धर्मार्थमेतानि कृतानि पुंसां दद्युर्दिवौकस्त्वविमुक्तसिद्धिः।
अताप्यपूज्यत्वमशेषलोकैस्तेजःशरीरीति चरेन् गता भीः॥
यस्यास्ति भीतिः पुरुषस्य पापात् इच्छेच्च कर्त्तुं चयमेनसाञ्च।
प्रीत्येव तं च व्रतदानजप्यं मोदिष्य मेतन्नतदन्यतस्तु॥
वदन्ति दान मुनयः प्रधानं कलौ युगे नान्यदिहास्ति किञ्चित्।
विशोधनं सर्वमिहापि पूज्यं वदामि तस्मादथ दानधर्मात्॥

इति श्रीवृहत्पाराशरीये सुव्रतप्रायश्चित्तनिर्णयः सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

दानानि विधिना सार्धं जगौ यानि पराशरः।
व्यासस्य तानि वक्ष्यामि श्रूयतां द्विजसत्तमाः॥
दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते।
इहामुत्र च दानेन पूज्यो भवति मानवः॥

न दानात् परतो धर्म स्त्रैलोक्ये सचराचरे।
मुमुक्षवोऽपि योगीशा भिक्षादानोपजीविन ॥
अन्नं लोयसमायुक्तं पृथगेते तथैव च।
सर्वोपस्करसंयुक्तं गृहञ्च गृहमात्रकम् ॥
वृषादियुक्तसीरञ्च एककृषं तथैव च।
गृह्याग्निना प्रदानेन गोप्रदानं तथैव च।
सौरभेयी द्विवक्त्राञ्च तिलधेनुमत परम्।
घृतधेनुं जलधेनुं हेमधेनुं सविस्तरम् ॥
कृष्णाजिनप्रदानञ्च वाजिस्यन्दनमेव च।
एकहस्तिप्रदानञ्च कन्यादानफलंतथा ॥
भूमिदानंफलञ्चैव तुलापुरुषमेव च।
हेमरूप्यप्रदानञ्च नानाकादिसमन्वितम् ॥
त्रपुसीसकताम्रादिसर्वधातुप्रदानवत।
नक्षत्रतिथियोगेषु यद्यद्दानञ्च तत् फलम् ॥
विद्यादान फल तस्य प्रजादान मथैव च।
अभयादिकदानानि प्रतिग्रहे यथाविधि ॥
इष्टापूर्त्तौ फलार्पितौ सर्वं विस्तरतो मया।
शक्तिस्थूलाश्रित पूर्वं क्रमात्कथयत शृणु॥
गोहिरण्यादिदानाना सर्वेषामप्यनुत्तमम्।
अन्नदानमपेक्षन्ते सर्वेऽपि हि दिवौकस ।
अन्नार्थं मातरिश्वाद्य ह्यन्नार्थञ्च तथानल ।
अन्ना । मनिा नै वातिरूनति भामी।
अन्नकाम. सर्वमिदं विधिरप्यनन जगत् ॥
तस्मादन्नात्परं तत्त्वं न भूत न भविष्यति।

दद्याद्दरिद्रस्तस्मादन्नं विमाय मानवः॥
घृतं वा यदि वा चाम्रं स स्वर्गे सुखमेधते।
गोभन्तान् प्रभृतान् सर्वान् पक्वान्नपरिपूरितान्॥
अपूपैः सुदकाद्यैश्च दत्त्वा दिवं सुखं व्रजेत्।
द्विजान् यः पाययेत्तोय मन्यानपि पिपासितान्॥
प्रणां तु कारयेद्ग्रीष्मे माप्नोति देवलोकताम्।
षट् पालाख्यादिकं दद्याद्वर्षासु च प्रतिश्रयम्॥
पादाभ्यङ्गन्तथैवेध: शीते चावरणानि च।
उपानत्पादुके चैव ददत्कामानवाप्नुयात्॥
सप्तव्रीहिसमायुतं सर्वस्नेहसमन्वितम्।
सर्वोपस्करसंयुक्तं सर्वालङ्कारभूषितम्॥
हिरण्य गोष्टपाश्चैव कुलिशाद्युपधानकैः।
चारस्त्रीभूषणैर्युक्तं सकांस्य ताम्रभाजनम्॥
कण्डन्यादिसमायुक्तं ददत्पालाय मानवः।
पर्केष्टकाचितं कृत्वा सर्वलक्षणसंयुतम्॥
स्वर्णमयं वा तथा सद्यः कृत्वा चाश्ममयं तथा।
दत्त्वा स्थानमवाप्नोति प्रजापतिरथं स्वयम्॥
प्राकारा यत्र सौवर्णाः स्फटिकाद्युत्तैस्तराणिच।
माणिक्यगारुडैर्वज्रैर्मौक्तिकैर्भूषितानि च॥
देवकन्यासहस्रेण स वृतो गीतनृत्यकैः।
सेव्यमानोऽप्सरःसङ्घैः प्रजापतिसमं वसेत्॥
अनड्वाहौ च धूर्वाहौ बलवन्तौ सुलक्षणौ।
तरुणौ सविषाणौ च घण्टाभरणभूषितौ॥
अदुष्टाविकवर्णौ तु शरीरौ दक्षिणान्वितौ।

य आहूय द्विजाग्राय दद्याद्भक्त्या तु मानवः॥
सोऽनडुद्रोमतुल्यानि स्वर्गे वर्षाणि तिष्ठति।
अमरीभिर्वृतोऽजस्रं सेव्यमानश्च दैवतैः॥
एकोऽपि हि वृषो देयो धूर्धरः शुभलक्षणः।
अरोगश्चापरिक्लिष्टो दशगोसमः॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः।
आहेमपीताद्धरणीसमानात्तस्माद्वृषात् पूज्यतमोऽस्ति नान्यः।
वृष्टिदानं प्रवक्ष्यामि यथादेयं द्विजातिभिः।
यो विधिर्दक्षिणायाश्च तथा सर्वं निबोधत॥
एकरात्रोषितः स्नातो गोदाता पञ्चगव्यतः।
पञ्चाम्बेन संस्नाप्य संपूज्य मधुसूदनम्॥
सवत्सां वस्त्रसंयुक्तां शतयज्ञोपवीतिनीम्।
सुविषाणां सुरूपाञ्च सर्वलक्षणसंयुताम्॥
हेमकल्पितशृङ्गाञ्च सुरूपां चरणाग्रकाम्।
पयस्विनीं सुशीलाञ्च हिरण्योपरि संस्थिताम्॥
हिरण्यं वाचयित्वाग्रे स द्विजायोपपादयेत्।
प्राङ्मुखाय च विप्राय वृष्टिन्ताञ्च उदङ्मुखीम्॥
इमां त्वं प्रतिगृह्णीष्व प्रीतोऽस्तु केशवो हरिः।
इति दत्त्वोदकं हस्ते पादान्यष्टौ विसर्जयेत्॥
व्यावर्त्तयेत् ततः पश्चात् प्रणम्य शिरसा द्विजम्।
अनेन विधिना धेनुं यो विप्राय प्रयच्छति॥
स विष्णुप्रीणनाद्याति विष्णुलोकमसंशयम्।
आत्मनः पुरुषान् सप्त प्रागस्तान् सप्त सप्त च॥
आत्मानं सप्तजन्मोत्थान् पापाद्विमुच्यते नरः।

पदे पदे तु यज्ञः स्याद्गोर्वत्सस्य च मानवः॥
फलमाप्नोति विप्रेन्द्राः शुद्धा वै तत्पुरा हरेः।
सर्वकामसमृद्धात्मा सर्वलोकेषु पूजितः।
नाम्ना पापपरांस्तावद्यावदिन्द्राश्चतुर्दश॥
इत्त्वाकूणान्तथा चान्यैर्बहुधा वसुधाधिपैः॥
यैर्या नृभिरियं दत्ता जग्मुस्तेऽपिच विष्टपम्।
दीयमानं च पश्यन्ति ये भवन्त्यनुमोदकाः॥
तेऽपि पापविनिर्मुक्ताः विष्णुलोकमवाप्नुयुः।
पादद्वयं मुखं योन्यां प्रसवन्त्या प्रदृश्यते॥
यदा च द्विमुखी गौः स्यात् देया यावन्न सूयते।
पृथ्वीतुल्या तदा सा गौः सर्वज्ञा मुनीश्वरैः॥
सापि प्राग्विधिना देया सद्धाख्या दोहना द्विजाः॥
एकत्र पृथिवी सर्वा सशैलवनकानना॥
तस्या गौर्ज्यायसी साचादेकतोभयतोमुखी।
गोर्वत्सस्य च लोमानि यावत्संख्यानि सत्तमाः॥
तावत्संख्यानि सर्वाणि ध्रुवं ब्रह्मजने वसेत्।
यथारोगामक्लिष्टाङ्गान्धेनुं वा यदि वा तनुम्॥
दद्यात् स्वर्गमवाप्नोति देया यथा तथाहि गौः।
तिलधेनुं प्रवक्ष्यामि प्रीणनाय हरेरिमाम्।
यया तुष्यति गोविन्दो दत्तया नु गवाऽनघ॥
ब्रह्महा स्वर्णहा गोघ्न पितृमातृसुहृद्वधात्।
अग्निदो गुरुहा चैव तथैव गुरुतल्पगः॥
सर्वपापसमायुक्तो युक्तो यश्चोपपातकैः।
सर्वैनोभिः प्रमुच्यन्ते तिलधेन्वा प्रदत्तया॥

अनुलिप्ते महीपृष्ठे वस्त्राजिनप्रसारिते ।
धर्मज्ञा केचिदिच्छन्ति कुतपेच तिलाद्वरे ॥
प्रस्तीर्य चाविकं भूमौ तत्र कृष्णाजिनं पुनः ।
तिलांस्तु प्रक्षिपेत्तत्र कृष्णाटकैश्चतुष्टयम् ॥
कुर्यादुत्तरतोऽभ्यर्थ्य धटकेन तु वत्सकम् ।
सर्वरत्नैरलङ्कुर्यात् सौरभेयीं सवत्सकाम् ॥
कार्ये हेममये शृङ्गे सास्ना रूप्यमयी तथा ।
ताम्रपृष्ठेच्पादाच कार्या मुक्ताफलेचया ॥
गन्धस्रापनश्रवणा फलरत्नवती तथा ।
प्रांभस्त्रग्वयलाङ्गूली नवनीतस्तथान्वित ॥
नारङ्गैर्बीजपूरैश्च जम्बीरैर्नारिकेलकैः ।
बदराम्रकपित्थैश्च मणिमुक्ताफलार्चिताम्॥
सितवस्त्रयुगच्छन्ना सितच्छत्रसमन्विताम् ।
ईदृग्विधान्तां कुर्यात् श्रद्धया पत्न्यान्वितः ॥
काम्यापदोहना दद्यात् केशव । प्रीयतामिति ।
कुर्यादि दृष्टिवद्दिदानिमा प्रत्युत्तरामुखीम् ॥
सम्यगुत्थाय विधिवद् दत्त्वैतेन द्विजोत्तम ।
सर्वपापैर्विनिर्मुक्तः पितरं स पितामहम् ॥
प्रपितामहमाथा पूर्वं पुरुषाणां चतुष्टयम् ।
द्विजेन्द्राणामारभ्यर्थे तारितेन धेनुप्रदो नरः ॥
यश्च गृह्णाति विधिवत् पुरुषान् सोऽपि तारयत् ।
चतुर्दश तथा येन उद्धृतान्यग्नौ होमिकः ॥
दीयमानञ्च पश्यन्ति तिलधेनुश्च ये नराः ।
तृप्यन्ति येन ता भक्त्या परया नाम तारयाः ।

तेऽप्यशेषाघनिर्मुक्ता. प्रयान्ति विष्णुलोकताम् ॥
प्रशान्ताय सुशीलाय तथा मत्सरिणे बुध ।
तिलधेनु नरो दद्यादि दम्भात्त ह्यधार्मिके ॥
त्रिरात्र यस्तिलौधारस्तिलधेनु प्रयच्छति ।
तथैकरात्रन्तु पुनस्त्रिरात्रन्तु सर्भक्तिक ॥
दातुविप्रुद्वपापस्य तस्य पुण्यवती' द्विज. ।
चान्द्रायणाद्यधिकं यस्य तत्तिलत्तणम् ।
एव प्रतिगृह्णीतापि आदत्ते विधिना द्विज ॥
स तारयति दातारं आत्मानञ्च न सशय: ।
प्रतिग्रहन्तु दीप्ताग्निदग्धविप्रमुखेरिता ॥
न स्फुरन्तीह मन्त्राश्च जपहोमादिकेषु च ।
तदा न वीर्य तस्य न तं कर्मणि योजयेत् ॥
निष्फल तत्कृतं कर्म स्वतस्थौषधदानवत ।
अथात. संप्रवक्ष्यामि घृतधेनुमपि द्विज । ।
येन सा विधिना देया तां प्रवक्ष्याम्यत. शृणु ॥
वदामि धेनु घृतकल्पिता यो विधिश्च यैवै निचयै प्रकल्प्या ।
फलं प्रदाने मनुजस्य यस्मात् क्रमाच पात्नन्तमुपर्व यञ्च ॥
गोक्षीरसर्पिर्मधुखण्डदध्ना संस्थाप्य विष्णु शुभवारिणाच ।
सपूज्य पुष्पैश्च विलेप्य गन्धैर्दद्यान्निवेद्यञ्च मधूपदीपम ॥
घृतञ्च वह्निर्घृतमेव सोमो घृतञ्च सूर्यो एवमेव चाम्भ. ।
सर्वेहि तस्मात् घृतमेव विद्वन् । घृत प्रदत्ते सकल प्रदत्तम् ॥
घृतेन गव्येन तु पूर्णकुम्भ प्रकल्पाने गो करकञ्च वत्स ॥
हिरण्यगर्भा मणिरत्नशोभा तुरम्य श्मरुसुचारुनासम् ॥

शृङ्गे च कृष्णागुरुदारवे च सौवर्णनेत्रे पटसूत्रसास्ना ।
क्षौमञ्च पुच्छं गुडदुग्धवक्त्रा जिह्वाच तस्या वरशर्करायाः ॥
द्राक्षोत्थैश्च हि खर्जूरैरन्यैः स्वादुफलैरपि ।
उरस्तस्याः प्रकर्त्तव्यं पृष्ठन्ताम्रञ्च धीमता ॥
इक्षुयष्टिमयाः पादाः शफा रौप्यमयास्तथा ।
धान्यैश्च सप्तभिः पार्श्वौ लोमानि सितसर्षपैः ॥
कांस्यदोहाच कर्त्तव्या सितवस्त्रच्छदा तथा ।
सितच्छत्रसमायुक्ता सितचामरभूषिता ॥
सितयज्ञोपवीता च सितस्रग्दामभूषिता ।
वत्सस्य कुर्यादिति सङ्गतानि प्रोक्तानि सर्वाण्यपि यानि धेनोः ।
अङ्गानि सर्वाणि च तद्वदस्य छत्रं सवस्त्रं च तथैव विप्र ? ॥
ददाम्यहं त्वेनां मम पापहत्यै दुःखारसमारपयोधिपोतः ॥
संसारतारो भुवि भूमिदेव । स्वर्गं प्रदेहि त्वम विप्रराज । ।
विष्णुः सुरेभ्यो घृतरश्मिरस्याः प्रीतोऽस्तु दानेन वरं प्रदातु ॥
व्याहृत्य चैतन्निजगर्भसूतीय दत्त्वा ह्यमस्वेति च वाग्विधेया ।
दाता द्विजेनाथ तु पूर्वमुक्तं सम्प्राश्य भर्त्विव्रतमात्मशुध्यै ॥
कार्य्यं प्रमुक्तोऽखिलकिल्बिषैस्तु प्राप्नोति लोकान् घृतदुग्धदिग्धान् ॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
तेषु लोकेषु विप्रेन्द्र । सुपुण्येषु प्रजायते ॥
पितॄनूर्ध्वन्तु ये सप्तपुरुषास्तु येऽप्यधः ।
तांस्तेषु द्विजलोकेषु स नयत्यक्तकिल्बिषः ॥
स धामानामिय दृष्टिः कथिता तव सत्तम । ।
विष्णुलोकं नरा यान्ति निष्कामा घृतधेनुदाः ॥
जलधेनुं प्रवक्ष्यामि प्रीतये दत्तया यया ।

देवदेवो हृषीकेशः सर्वेशः सर्वभावन ॥
जलधेनुं द्विजश्रेष्ठ। सम्पूर्णरजतस्थितम् ॥
रत्नगर्भमशेषैस्तु ग्रामैर्वन्यै समन्वितम् ।
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ॥
कुष्ठमासीमुरोशीर बालकामलकैर्युतमं ।
प्रियङ्गुपत्रसयुक्तं सितयज्ञोपवीतिमम् ॥
सोपानत्कञ्च सच्छत्र दर्भविष्टरसंस्थितम् ।
चतुर्भि. संवृतं पात्रै स्तिल पूर्णैश्चतुर्दिशम् ।
स्थगितं दधि पात्रेण घृतक्षौद्रवता मुखे ।
उपोषित. समभ्यर्च्य वासुदेवं सुरेश्वरम् ॥
पुष्पधूपोपहारैश्च यथा विभवसम्भवम् ।
सकल्प जलधेनुञ्च समभ्यर्च्य जनार्दनम् ॥
पूजयेद्वत्सकं तद्वत् कृतञ्जलमय बुध ।
अत्रोचुरपरे केचित् पूजयेत् घृतवत्सकम् ।
पञ्चांशेन तु कुम्भस्य चतुर्थांशेन वा परे ।
एवं संपूज्य गोविन्द जलधेनुं सवत्सकाम् ॥
सितवस्त्रधर शान्तो वीतरागो विमत्सर ।
दद्याद्विप्राय विप्रेन्द्र प्रीत्यर्थं जलशायिनः ॥
जलशायी जगद्योनि प्रियतां मम केशव ।
इति चोच्चार्य्य विप्रेन्द्रो विप्राय प्रतिपादयेत् ॥
अपक्वाननिना स्थेय अहोरात्र.मत: परम् ।
अनेन विधिना दत्त्वा जलधेनु द्विजोत्तम ।॥
सर्वराज्य मवाप्नोति यत् यत् ध्यायेत् स मानव ।
शरीरारोग्य माप्नोत प्रशमः सर्वकामिक. ॥

तृप्तां भवति दत्तायां जलधेन्वां न संशयः ।
इमामपि प्रशंसन्ति जलधेनुं द्विजोत्तम ॥
ये नरास्तेन वै यान्ति विष्णुलोकं समव्ययम् ।
हेमाद्यैश्च तिलैर्विद्वन् । यद्यपि गौ प्रकल्पिताम् ॥
भक्ष्यास्तु ते तथाप्येव धर्मशास्त्रमतो द्विज ।।
अथातः संप्रवक्ष्यामि दानानामुत्तमं परम् ॥
यद्दत्त्वा मानवो याति सायुज्य परवेधमः ।
धेनुर्देया सुवर्णस्य कारयित्वा द्विजातये ॥
यान्दत्त्वा प्राक्प्रतीपाला. ब्रह्मणः सद्गतिङ्गताः ।
सा चतुर्भिस्त्रिभिर्वाप्यथ सुवर्णपलैर्द्विजः ॥
द्वाभ्यां वापि पलाभ्यान्तु पलेनैकेन वा पुनः ।
हीनं तु नैव कर्तव्यं सत्यां सम्पदि स द्विज ॥
हीनन्तु कुर्वतो दानं दातुस्तु निष्फलं भवेत् ।
चतुर्थांशेन धेन्वास्तु हेमवत्सं प्रकल्पयेत् ॥
सर्वरत्नैरलङ्कुर्य्याद्दिव्यमाल्याम्बरेण तु ।
राजतं वत्सकं कुर्य्याद्वत्सुरन्ये च तद्विदः ॥
अलङ्काराय सर्वेऽपि गोवद्रत्नैः प्रकल्पयेत् ।
प्रकाशाद्वासुदेवस्य सुगाणीया युधिष्ठिर ॥
दत्त्वा प्राप्तो हरेर्लोकं सा मयेयमुदीरिता ।
मुक्ताफलयुक्ता कार्या प्रवालकर्णिपाणिका ॥
पद्मरागाक्षियुग्मा च इन्द्रनीलस्तनान्विता ।
कर्पूरागुरुनासा च शर्करारसना तथा ॥
सुष्टुङ्ग्युग्मपार्श्वा च क्षेममाल्यावती तथा ।
इत्यादिगुणशाली च पदगश्च समानकम् ॥

नारीकेलैश्च कर्त्तव्यौ कर्णौ दृष्टश्च कासकम् ।
सप्तद्रुत्सूत्रलाङ्गूल सप्तधान्यसमावृता ॥
फलपुष्पोपसम्पन्ना छत्रोपानलसमन्विता ।
सुवर्णधेनुं कोर्य्या च विप्राय प्रतिपादयेत् ॥
अश्वमेधसहस्रस्य दत्त्वा फलमवाप्नुयात ।
कुलानां हि सहस्रन्तु स्वर्गं नयत्यसंशयं ॥
किमन्यैर्बहुभिर्दानै रत्नहेमगवाऽनया ।
हेमधेनुप्रदानेन कृतकृत्यो हि वर्त्तते ॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत् ।
उपवासी विशुद्धात्मा दत्त्वा सोमरविग्रहे ॥
दीयमानञ्च पश्यन्ति ये नरा हेमगामिमाम् ।
रक्षोभूतपिशाचाद्या स्ततो नश्यन्ति सद्द्विज ॥

एता मयोक्तास्तव वत्स । सर्वा दृष्टादिका वत्सरतोऽत्र गावः।
इक्ष्वाकुभूमतस्पति चितीयाञ्चमुद्दिवं यं विधिवत् प्रदाय ।

कृष्णाजिनस्य दानस्य प्रवक्ष्यामि यथाविधिम् ॥
प्रमाणञ्च विधिर्यस्य यस्मै विप्राय दीयते ।
वैशाख्यां पूर्णिमायाञ्च कार्त्तिक्यां माघवाऽपि वा ।
यतयोस्तु प्रदातव्यं रविसोमग्रहेऽपि च ॥
अक्लिष्टमच्छिद्रमलोकमञ्च सप्राग्भागारम्भं प्रयफसखोफम्
साण्ड प्रदेयं सविषाणवक्त्रं ग्रस्तप्रदानमितकृष्णचर्म।
एतमेव विधं चर्म गृहीत्वा द्विजपावनम् ।
कलयेद्देनुवत्तञ्च हेमशृङ्गादिकं पुनः ।
शृङ्गे हेममये तस्य शफाश्च रजतस्य च ॥
मुक्ताफलैश्च लाङ्गूलं कुर्य्यात् गात्रं विवर्जयेत् ।

अनुलिप्ते महीपृष्ठे प्रसूने कुतपेऽशुके ॥
तत्र प्रसारयेन्मार्गे तिलैस्तदपि पूरयेत् ।
वदन्ति तद्विदश्चैव चतुर्द्रोणास्तु पूरयेत् ।
नाभिपुन्मात्रकं कुर्यादपरे कवयोविदुः॥
नाभिमात्रं वदन्त्यन्ये राशिं कुर्यादिति द्विजः ।
हेमनाभञ्च तं कुर्यात् हेमकर्षेण तु द्विज ॥
शक्त्या वापि प्रकर्त्तव्यं मनः शुद्धिर्यथा भवेत् ।
सौवर्णक्षीरपूर्णन्तु प्राज्यपादौ च दापयेत् ॥
राजतं दधिपूर्णन्तु यथा दक्षिणतो द्विजः ।
ताम्रमाज्यभृतं पात्रं पश्चिमस्यां तथादिशि ॥
क्षौद्रपूर्णं तथा कांस्यं चतुर्दिक्षु क्रमेण तु ।
शक्त्या वापि च कर्त्तव्यं वित्तशाठ्यं विवर्जयेत् ॥
तद्दद्याद्देवविदुषे ब्राह्मणायाहिताग्नये ।
परिधाप्यापि ते वस्त्रे चालङ्कृत्य च भूषणैः ॥
चतस्रो दृष्टय वार्य्या दूत्यन्ये कवयो विदुः ।
वदन्ति कवयो गाथा मार्गमाहात्म्यवेदिनः ॥
न सा विद्वांश्च विप्रास*पुराणार्थविदोऽपरे ।
*यस्तु कृष्णाजिनं दद्यात् सखुरं सृगसंयुतम् ॥
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ।
ससमुद्रगुहान्तेन सशैलवनकानना ॥
चतुरन्ताश्च संयुक्ता पृथिवी नात्र संशय ।
कृष्णाजिने तिलान् दत्त्वा हिरण्यमधुसर्पिषा ॥
ददाति यस्तु विप्राय सर्वन्तरति दुष्कृतम् ।
यः कृष्णाजिनमास्तीर्य हेमरत्नयुतैस्तिलैः ॥

वस्त्राष्टतं सोपवासो विष्णोरापन्ननोस्यया।
वैशाख्यां पूर्णिमायाञ्च कार्त्तिक्यां वा समाहितः।
दद्याद् ,तत्तपोयुक्ते ब्राह्मणे च जितेन्द्रिये॥
शान्तानीके वाञ्छिताग्नौ प्रदद्याद्भूरिदक्षिणाम्।
यावन्त्यजिनलोमानि तिलाः वस्त्रस्य तन्तवः॥
तावन्त्यब्दसहस्राणि दाता विष्णुपुरे वसेत्।
विशेष अपरे ब्रूयुर्विषुवायनयोर्द्वयोः॥
तदग्रणावच्छिलोम प्रग्रीवं तु प्रसारयेत्।
चतस्रृषु तथा दिक्षु सौवर्णराजतानि च॥
निधाय शक्त्या पात्राणि चीराद्यैः पूरितानि च।
तस्या पश्चात् समिद्धाग्निं परिसमुह्य तं पुनः॥
पर्युक्ष्य च परिस्तीर्य महाव्याहृतिभिस्ततः।
सद्यो हुत्वातिलांस्तत्र विप्राय प्रतिपादयेत्॥
नाभिं सुयन्त्रदीतीय मार्गं टह्लास्यहं त्विदम्।
धीमान्दद्याद् द्विजेन्द्राय वाचयित्वा प्रतिग्रहम्॥
पश्चाद्वस्त्रादिकं दद्यात् एष प्रतिग्रहे स्थितः।
अत्रा गीताप्ययो गाथा मुदाहरन्ति तद्विदः॥
दातृणां सत्तमानान्तु विशेषप्रतिपत्तये।
गोभूहिरण्यसयुक्तमार्गमेकं ददाति यः॥
स सर्वपापकर्मापि सायुज्यं ब्रह्मणो व्रजेत्।
प्रोक्तेन चैतेन मुनीशमार्गं दद्याद्द्विजेन्द्रे विधिना प्रयुक्तम्।
पापानि हत्वा स पुरातनानि यायात्स वेधोवपुषा च योगी॥
मृषासनञ्च यो दद्यात् जापमात्य मयोत्तमम्।
देवयानैर्दिवं यान्ति स्तूयमानैः स दैवतैः॥

य रथं हयसंयुक्तं हेमपुष्पैरलङ्कृतम् ।
शतरज्जुञ्च पादाद्यै र्नेतपादशतैरपि ॥
तत्सर्वं स्थगितं वस्त्रैः परिपट्टालकैः शुभैः ।
मुक्ताफलैः शतशैः मणिभिश्चोपशोभितम् ॥
अग्रे चैव शुभे वस्त्रे भूषितांवत्यलङ्कृतम् ।
तद्भूषणैरलङ्कृत्य सुखयन्त्रसुशोभितौ ॥
सपर्याणौ कशायुक्तौ ग्रीवाभरणभूषितौ ।
शुभलक्षणसंयुक्तौ तरुणौ तत्र योजयेत् ॥
रविसोमग्रहे दद्यच्छुभवान् यत्र कर्मणि ।
अयनयोर्वा द्विजाग्र्याय स प्राप्नोत्यर्कलोकताम् ॥
वसेद्दिवि समन्तत्र सेव्यमानः स दैवतैः ।
एकमपि हि य दद्यात् सर्वालङ्कारभूषितम् ॥
स लब्धा सुवर्णञ्च सोऽश्वलोक मवाप्नुयात् ।
दद्यादश्वरथ यस्तु हेमरत्नविभूषितम् ॥
दिव्यवस्त्रपरिच्छन्न नेत्रपट्टादिभि. शुभैः ।
सौवर्णैरर्धचन्द्रैश्च राजतैर्वा विभूषितम् ॥
शुभैर्मुक्ताफलैरन्यै र्नीलवस्त्रादिभि स्तथा ।
गजौ सुलक्षणोपेतौ सुशीलौ निरुजावपि ॥
सुरदानौ सुरूपौ च हेमालङ्कारभूषितौ ।
दिव्यवस्त्रैः परिच्छिन्नौ कर्णशाखावलम्बिनौ ॥
पटिनेत्रादिकाद्यौ तौ विशिष्टमणिभूषितौ, ।
ईदृग्रथञ्च संयोज्य पताकाभि र्विभूषितम् ॥
शोभित पुष्पमालाभिः शङ्खदुन्दुभिनिस्वनैः ।
चतुर्वेदाय विप्राय त्रिवेदाय तथा पुन ॥

शुचये च द्विवेदाय श्रोत्रियाय कृतेष्टये ।
अलङ्कृत्य स माल्याभि रङ्गुलीयसुवाससी ॥
तस्य हस्तोदकं दद्यात् प्रीयतां केशवस्त्विति ।
एवं हस्तिरथं दद्यात् समभ्यर्च्य द्विजातये ॥
निहत्य सर्वपापानि विष्णुलोके महीयते ।
वसेच्चतुर्भुजस्तत्र सेव्यमानश्चतुर्भुजैः ॥
अनन्तकाले स तिष्ठेच्छङ्खचक्रगदाधरः ।
पश्यन्तीह रथं ये तु दीयमानं नरा द्विज ।॥
तेऽपि विष्णुपुरं यान्ति वाशिष्ठस्य वचो यथा ।
एके मेऽपि कृपो दद्याद्धस्तिनश्च स भूषणम् ॥
सवस्त्र हेमरदनं नखे रजतकल्पिते ।
मणिमुक्ताफलैर्युक्तं सुवर्णरजतान्वितम् ॥
पूर्वोक्ताय च विप्राय चतुर्वेदाय वा द्विज ।
दद्याच्च विधिवत् सोऽपि सदा विष्णुपुरं वसेत् ॥
विधिवद्यः स्पृहाति सर्वमपि प्रतिग्रहम् ।
दाहलोकमवाप्नोति पराशरवचो यथा ॥
अनङ्कृत्य तु यः कन्यां ब्राह्मोद्वाहेन यच्छति ।
अन्योद्वाहेन केनापि हस्तिदानगतं लभेत् ॥
हस्तिदानस्य यत् पुण्यं तस्माच्छतगुणं फलम् ।
कन्यादा विधिवत्सर्वे प्राप्नुवन्ति ह्यसंशयम् ॥
पुत्रदानं समिच्छन्ति योविद्वान् से मनीषिणः ।
कन्यान्तेऽपि मन्यन्ते पुत्रदानगतं वरम् ॥
भूमिं शस्यवतीं दद्यादाशु विप्राय मानव ।
स भुक्तभुक्ताल्पया विष्णुलोके समावसेत् ॥

येनैव चर्मप्रमाणेन भूमिं दद्याद्द्विजातये
स विष्णुलोकमाप्नोति केचिद्गोचर्मणोविधाः
षड्भिस्तु प्रहिता विप्रा,वशात्तूभयतो द्विज
तेनैव द्विगुणानांच्छरिति केचिन्निवर्त्तनम्
पञ्चहस्तकदण्डाना चत्वारिंशद्ध दशाहत।
पञ्चभिर्गुणिता सा तु निवर्तनमिति स्मृतम्
बालवत्सकधेनूनां सहस्र यत्र तिष्ठति।
तद्वै निवर्तनं ज्ञेयं इति केचिद्वदन्ति हि॥
ताम्रपट्टे पटे वापि लेखयित्वा च शासनम्
ग्रामं विप्राय वा दद्याद्वसीरचितिं पुन ॥
सीरस्यैकस्य वा दद्यात्तस्य पुण्य किमुच्यते।
भूम्यंशु कणिकातुल्या, समा विष्णुपुरे वसे
भूमिदानात्परो धर्मो त्रैलोक्येऽपि न विद्यते
.पादैकमात्रदानेन तस्य विष्णुपुरे स्थिति ॥
तस्य दानात्परो धर्मस्तद्वृत्तेश्च तथन्तथा।
तस्मात्ता यततो दद्याद्धरणाश्च विवर्जयेत्॥
इहैव भूमिदानस्य,प्रत्यच चिह्नमीच्यते।
चितिद स्वर्गतो भ्रष्ट चितिनाथ पुनर्भवेत्
भुनक्ति च पुनर्भोगी यथा दिवि तथा भुवि।
गजैरश्वैर्नरैर्युक्तो हेमरत्नविभूषित ॥
वरस्त्रीगणसेव्य स्तूयमान स्वबन्धुभि:।
छत्रालङ्कारसंयुक्तो वस्त्रवाद्योत्सवादिभि ॥
इत्यादि भूमिदानस्य चिह्नन्ते यत्र। कीर्तित

यावत्तिष्ठति सा भूमि स्तावत् स्वर्गे महीयते।
गृहभूमिञ्च यो दद्याद्दोहाखममात्रकाम् ॥
गृहस्योपस्करन्दद्यात्स्वदानफलं लभेत्।
कियन्मात्रञ्च यो दद्याद्भूमिं विप्राय मानवः ॥
तस्यापि हि महापुण्यन्स्यात्कुलमोचकम्।
नैतस्मात्परमं दानं क्वचिदस्ति धरातले ॥
पुण्यफलं प्रवक्ष्यामि विशेषेण तु तत् शृणु।
हैमानि यत्र मानानि मणिभिर्भूषितानि च ॥
प्राकारा तत्र सौवर्णाश्चतुर्द्वाराः सुतोरणाः।
दिव्याश्चाप्सरसो यत्र तासां सङ्ख्या ह्यनेकशः ॥
सुपर्व्वाणी कलायुक्तौ ग्रीवाभरणभूषितौ।
दृष्ट्वा याः कामदेवोऽपि नचेत्कामातुरः क्षणात्।
सुकेशाः सुललाटाश्च बालचन्द्रोपमभ्रुवः ॥
सुनासाकर्णगण्डाश्च शुभोष्ठाधरपल्लवाः।
सुग्रीवा भुजपाल्यग्रा पीनोत्तुङ्गस्तनास्तथा ॥
सुमध्योरुनितम्बाश्च सुश्रोण्यश्च शुभोरुकाः।
सुजानुजङ्घागुल्फाश्च सुपादाः सुनखास्तथा ॥
केन रूपेण ता वर्ण्या भवन्त्यप्सरसो द्विज।
वैष्णवाः गणिकाः सर्वाः दिव्यस्त्रग्वस्त्रभूषणाः ॥
दिव्यानुलेपलिप्ताङ्गा दिव्यालङ्कारभूषिताः।
मन्मथोऽपि हि तान् दृष्ट्वा भवेत्कामातुरः क्षणात् ॥
वर्ण्यन्ते ताः कथं देव्यो या लक्ष्मीप्रतिमोपमाः।
वैष्णवाप्सरसा सङ्घैर्वेष्टितावामरादिभि।
गीयमानश्च गन्धर्वैः स्तूयमानश्च दैवतैः ॥

वसेन्विष्णुपुरे तावद्यावत् विष्णु रज: चितौ ।
पुण्यं वै भूमिदानस्य कथितन्तव वत्सक । ॥
मोक्षुर्धरित्री कुलपर्वताश्च पायोऽर्णवः स्वर्गतलादिकादि: ।
देयानि सर्वाणिच सर्वकामै: प्रोक्तानि दानानि पुरावदद्भि: ॥
आत्मतुल्यं सुवर्णस्या रजत द्रव्यमेव च ।
यो ददाति द्विजाग्रेभ्योस्तस्याप्येतत् फल भवेत् ॥
ब्रह्महत्यादिपापैस्तु यदि युक्तो भवेन्नर: ।
स तत्पापविनिर्मुक्त प्रोक्ते विष्णुपुरे व्रजेत् ॥
तुलापुरुषभूम्यो च दीयमानौ च ये नरा: ।
पश्यन्ति तेऽपि यान्त्येव येच स्युरनुमोदका: ॥
गुड वा यदि वा खण्ड लवणस्यापि तोलितम् ।
यो ददात्यात्मना तुल्य नारी वा पुरुषोऽपि वा ॥
पुमान् प्रद्युम्नवत्स । स्यान्नारी स्यात्पार्वतीसमा ।
सौभाग्यरूपसंयुक्ते भुञ्जीतान्ते त्रिविष्टपम् ॥
हिरण्यदक्षिणायुक्त रुक्म भूषणान्वितम् ।
अनड्कृत्य द्विजाग्रान्तं परिधाप्य च वाससी ।
खण्डादितोलित पश्चाद्विप्राय प्रतिपादयेत् ।
सर्वकामसमृद्धात्माऽनन्तकालि वसेद्दिवि ॥
षड् यराख मंडिपश्च मेय श्यडान् करेण महियीमजाय ।
ब्रूयु परोष्टी मविक्रां मुनीन्द्रा। हेमादियुक्तं सकलञ्च दानम् ।
वराणि रत्नानि च हैमरूप्य शुभानि वासांसि च काश्यतानि ।
यथाधिमात्र काभाटि कृत्वा हेमादिदानं द्विज । दीयते हि ॥
केचिद्ददन्ति चैतानि कृत्वा हेममयानि च ।
सर्वोदकायुक्तानि देयानि हेमधेनुवत् ॥

अर्चयित्वा हृषीकेशं पुण्येऽह्नि विधिपूर्वकम् ।
अग्निवृद्धं सुवर्णञ्च विप्रमाहूय यच्छति ॥
स भुक्त्वा विष्णुलोकन्तु यदा गच्छति संभृतौ ।
तदासौ तेन पुण्येन धनयुक्तो द्विजो भवेत् ॥
यो रौप्यमुत्तमं दद्यादर्थिने ब्राह्मणाय च ।
सोऽतीवधनसंयुक्तो रूपयुक्तश्च जायते ॥
माणिक्यानि विचित्राणि नानानामानि यो नरः ।
तथा ताम्रञ्च कांस्यञ्च त्रपुं वा सीसकादि वा ॥
यो दद्याद्भक्तितो विप्रे स सोमलोकमवाप्नुयात् ।
सम्पूज्य सततं लोके रूपवानिह जायते ।
घृतं ददाति यो विप्रे सोऽत्यन्तं सुखमश्नुते ॥
भोजनाभ्यञ्जनार्थं वा भवेत्सोऽपि सुखी नरः ।
तैलप्रदानेन सततं भोजनाभ्यञ्जनाय च ॥
स्निग्धदेहोऽपि तेजस्वी रूपयुक्तश्च जायते ।
मृदङ्गञ्च सकर्पूरं तुरष्कं चन्दनादिकम् ॥
गन्धद्रव्याणि दत्त्वा तु शुभगन्धः प्रजायते ।
ताम्बूलं पुष्पमालाञ्च पुष्पालङ्करणानि च ॥
सुमतिर्वीर्य्यवांश्चैव धनयुक्तश्च जायते ।
शिशिरर्त्तौ च यो दद्यादनलं सेन्धनं नरः ॥
स समिद्धोदराग्निः सन् प्रज्ञास्त्रयुतो भवेत् ।
यो दद्याद्ब्राह्मणेभ्यश्च नित्यं सेधास्मि मानव ॥
श्रियायुक्तो भवेदेव संग्रामे चापराजितः ।
किञ्च वा बहुनोक्तेन दानस्य विस्तरेण च ॥
यद्यदिष्टतमन्तस्य तत्तस्मै प्रतिपादयेत् ।

तिलान् दर्भांश्च नित्यार्थं लवणान्याज्यरणा य च ॥
भुक्त्वा स तु सुखं स्वर्गे जातश्चात्र भवेद्भुवि ।
गुडमिक्षुरसञ्चैव दुग्धपक्वंरसाधकान् ॥
फलानि दत्त्वा सर्वाणि स्वादूनि मधुराणि च ।
सर्वाणि फलशाकानि लवणानि तथा द्विज ! ॥
स्वाद्यानि गन्धपात्राणि शुभगोत्रो भवेन्नरः ।
कूष्माण्डत्रपुषं दत्त्वा वृन्ताकादिपटोलकान् ॥
शुभानि कन्दमूलानि सुहृष्ट पुत्रवान् भवेत् ।
बदराम्रकपित्थानि खर्जूरदाडिमानि च ॥
चिञ्चाद्यामलकं दत्त्वा पुत्रवानिह जायते ।
या नारी द्विज ! चैतानि द्विजे भक्त्योपपादयेत् ॥
सर्वं तस्य भवेत्तद्धि धेनुदानसमन्वितम् ।
भोजनाच्छादनं दत्त्वा दत्त्वा वोपानहौ द्विज ॥
स्वर्गलोकन्तु सम्भुज्य सर्वकामोऽत्र जायते ।
याः पुण्यनार्यश्च सकामिपुंसा कामोपभुक्त्यै निजदेहदाः स्युः ।
गीर्वाणचेतोहररूपवत्यः पौरन्दरास्ता गणिका भवन्ति ॥
गन्धं या गणिकां वापि शयनासनविष्टपम् ।
दत्त्वा च कश्चिद विद्वान् विप्रान् य. पाठयेन्नर. ॥
धरादानादिकं व्यास विद्यादानं शताधिकम् ।
विद्यार्थिनाञ्च विप्राणां पादाभ्यङ्गमुपानहौ ॥
यो ददाति द्विजश्रेष्ठ ! ब्रह्मलोकं स गच्छति ।
धाराधारभ्य वेदांस्तु शास्त्रं वाच्यतमं द्विजः ! ॥
दध्यापयेत् द्विजान् शिष्यान्विद्यादानं तदुच्यते ।
उपाध्यायं निषेव्याग्रे तस्य दत्त्वा च वर्तनम् ॥

विद्यां भक्त्या प्रदद्यैव यः परब्रह्मण्यसौ विशेत्।
विद्यार्थिनेऽथ विप्राय यो दद्याद्भोजनं द्विजः॥
पादाभ्यङ्गं तथा स्नानं सोऽपि दानाग्रभाग् भवेत्।
य. स्वयं पाठयेद्धीमान् स्नात्वा भक्त्या च स द्विजः॥
सायात्म ब्रह्म सम्येति नागष्टष्ठ संस्तुतो।
ऋचं वा यदि वार्द्धं च पादं पादार्द्धमेव च॥
अध्यापयति तस्यापि नास्ति शिष्यस्य निष्कृतिः।
मन्त्ररूपं द्विजो दद्यादेकमपि शुभाक्षरम्।
तस्य दानस्य वै शिष्यो न कर्तुं निष्कृतिं क्षमः॥
यद्दिप्र। शिष्यप्रतिपादितेन विद्याप्रदानेन न तुल्यमस्ति।
नूनं धरित्र्यामविनाशि किञ्चिन् तस्मात्प्रदेयन्तु तदेव विद्वन्॥
रोगार्त्तस्यौषधं पथ्यं यो ददाति नरस्य तु।
अन्यस्यापि च कस्यापि प्राणदः स तु मानवः॥
किन्नरैर्भूषणैर्दत्तैर्गोभिर्वासोभिरेव च।
यादृत्तो प्राणहीनेन प्राणदान मतः परम्॥
अन्न प्राणो जलं प्राणः प्राणश्चौषधमुच्यते।
तस्मादौषधदानेन दाता सुरसमो द्विज।॥
प्राणदानं हि यो दद्यात्सर्वेषामपि देहिनाम्।
स याति परमं स्थानं यत्र देवश्चतुर्भुजः॥
यो दद्यान्मधुरा वाच माश्वासनकराश्च्युतम्।
रोगक्षुधादिनार्त्तस्य स गोमेधफलं लभेत्॥
क्लीबान्धबधिरादीनां रोगार्त्तानां शरीरिणाम्।
यत्किञ्चिद्दीयते तेषां दयादानं तदुच्यते॥
ये यच्छन्ति दयादानं कृत्वा दीनदयां नरः।

तेऽपि तद्दानधर्मेण विष्णुलोकमवाप्नुयान् ॥
अथान्यत्सम्प्रवक्ष्यामि तिथिमासगत द्विज ! ।
यत्प्रदानेऽस्मुनिश्रेष्ठ ! विशिष्टं फलमिष्यते ॥
मासे मार्गशिरे दान पूर्णचन्द्रतिथौ नरः ।
७० विधीनथ प्रवक्ष्यामि यत्प्रदानं महत् फलम् ॥
कांस्यपात्रमक्षिप्तं तु लवणं प्रस्थपूरितम् ।
हिरण्यनाभ वस्त्रेण कुसुम्भेन च छादितम् ।
स्नाताचान्ताय विप्राय सवस्त्रं प्रतिपाद्य च ।
सौभाग्यरूपलावण्ययुक्तो भवति मानवः ॥
गौरसर्षपयुक्तेन पौष्यानुत्सादितोनरः ।
स पुनरभिषेक्तव्यः कुम्भेन हव्यसर्पिषा ॥
सर्वगन्धोदकैश्चापि फलरत्नसमन्वितैः ।
सुवर्णमसुम्यं दृष्ट्वा प्रदद्यात्तु द्विजातये ॥
घृतेन स्नापयेद्विष्णुं भक्त्या सम्पूज्ययेद्धरिम् ।
घृतञ्च शुक्लमहक्तो घृतं दद्याद् द्विजातये ॥
एवं वस्त्रयुतं दद्यात्सोपवासः समाहितः ।
कर्मणा तेन धर्मज्ञ: पुष्टिमाप्नोत्यनुत्तमाम् ॥
माघ्यां कुर्यात्तिलैः श्राद्धं मुच्यते सर्वकिल्बिषैः ।
शुभं शयनमास्तीर्य फाल्गुण्यां स द्विजातये ॥
रूपद्रविणसंयुक्तो भार्यां रूपवतीं लभेत् ।
नरः प्राप्नोति धर्मज्ञः श्रियं प्राप्नोत्यनुत्तमाम् ॥
नार्यपि शुभभर्तारं रूपसौभाग्यसंयुतम् ।
प्राप्नोति विपुलान् भोगान्यात फार्याः विचारया ॥
पौर्णमासीषु चैतासु मासर्क्षसंयुतासु च ।

एतेषामेव दानानां फलं दशगुणं भवेत् ॥
महापौर्णासु चैतासु फलमक्षयं मश्नुते।
द्वादश्यां चैव शुक्लस्य चैत्रे वस्त्रप्रदो नरः ॥
अक्षयं फलमाप्नोति नागलोक मनुत्तमम्।
इत्यन्तं कथितं विप्र! फलं चैतस्य सत्तम! ॥
दद्याद्धेमच वैशाखे द्वादश्यां यो नरः सितम्।
शुक्लेच्छलोपानहौ च विष्णुलोक मवाप्नुयात् ॥
आस्तीर्य शयनं दत्त्वा प्रणम्य भोगशायिनम्।
आषाढशुक्लद्वादश्या चेत्द्वीप मवाप्नुयात् ॥
श्रावणे वस्त्रदानेन विष्णुसायुज्य मृच्छति।
गोदः प्रयाति गोलोकं मासे भाद्रपदे द्विजः ॥
प्रीणयेदश्वशिरसम् अश्वं दत्त्वा तथाश्विने।
विष्णुलोक मवाप्नोति कुल मुद्धरते स्वकम् ॥
स नरो वस्त्रदानेन कार्त्तिक्यां दिवमाप्नुयात्।
प्रदानं लवणानां तु मार्गशीर्षे महाफलम् ॥
धान्यानाञ्च तथा पौषे दारूणा मप्यनन्तरे।
फाल्गुणे सर्वगन्धानां भवेद्दानं महाफलम् ॥
गजर्क्षसंयुता चैत्रे द्वादश्यां तु महाफलम्।
माघे तु माधवे शुक्लद्वादश्याचाऽसंयुता ॥
मायव्येन युताशुक्ले शुचौ मूलेन वैष्णवी।
नभस्याश्विनयोः पुण्या श्रावणऋक्षसंयुता ॥
पौष्णर्क्षं संयुता चैव हेमार्गे कृत्तिकायुता।
सरस्ये रिक्थकोपेता तपसि चादित्यसंयुता ॥
गुरुर्क्षयुक्तपुष्ये च द्वादशी पावना स्मृता।

नक्षत्रयुक्ताखेतासु दत्त्वा दानानदात्तकम् ॥
मेष च मेषसंक्रान्तौ गोदृष वृषसंक्रमे ।
शयनासनदानञ्च मिथुनोपगमे तथा ॥
कर्कप्रवेशे शकून हि प्रदद्याच्छर्करा तथा ।
सिंहप्रवेशे पात्राणां तैजसानां तथैव च ॥
तुलाप्रवेशे धान्यानां वीजानां मतिचोत्तमम् ।
कीटप्रवेशे वस्त्राणां वेश्मानां दानमेव च ॥
धनुःप्रवेशे वस्त्राणां यानानाञ्च महाफलम् ।
झषप्रवेशे सर्वेषां धान्यानां दानमुत्तमम् ॥
स्नेहानाञ्चैव दारूणां दानमग्ने स्तथैव च ।
कुम्भप्रवेशे दानन्तु गवामर्थं तृणस्य तु ।
मीनप्रवेशे स्नानानां माल्यानां मपि चोत्तमम् ॥
दानान्यैतानि मया द्विजेन्द्र! प्रोक्तानि कालेतु नर प्रदाय ।
प्राप्नोति कामान् मनसाप्यभीष्टा सम्मात्प्रशंसन्ति हि कालदानम्॥
अशौचसूतके ऽपि न दातव्यः प्रतिग्रहः ।
सतोरपि तयो र्देया परन्त्वभयदक्षिणा ॥
रात्रौ दानं न दातव्यं दातव्य मभयं द्विज ।
त्रयाणामपि देयानि विद्याकन्या प्रतिश्रयाः ॥
पान्थानामतिथीनाञ्च गवामपि च पूजनम् ।
रात्रावपि च कर्त्तव्य मिति पाराशरोऽब्रवीत् ॥
शुचि सन्नशुचिर्वापि दद्यात् गृह्णीत चोभयम् ।
अन्नय दानकालोऽयं यदाभय मुपस्थितम् ॥
अन्नप्रतिग्रहो विद्वान् याचाय शुचिना सह ।
अशौचसूतके चैव न तु याह्या भवन्ति ते ॥

अव्यक्तेनच धर्मेण ! तथा मुक्तिगिरेन च ।
स्नात्वाचम्य पयः स्पृश्य गृह्णीत प्रयतः शुचिः ॥
द्रव्यस्य नाम गृह्णीयाद्दत्ता तथा निवेदयेत् ।
तोयं दत्त्वा तथा दाता दाने विधिरयं स्मृतः ॥
प्रतिगृहीता सावित्रं सर्वमन्त्र मुदीरयेत् ।
सार्धद्रव्येण तत् सर्वं तद्द्रव्यस्य सदैवतम् ॥
समापय्य ततः पश्चात्कामं स्नात्वा प्रतिग्रहम् ॥
प्रतियत्नी पठेदुच्चैः प्रतिगृह्याद्विजोत्तमात् ।
मन्दं पठेत राजान्यादुपांशु च तथाविशः ॥
मनसा च तथा शूद्रात् कर्त्तव्यं स्वस्तिवाचनम् ।
सोङ्कारं ब्राह्मणो ब्रूयात् निरोङ्कारं महीपतिः ॥
उपांशु च तथा वैश्ये स्वस्ति शूद्रे तथैव च ।
न दानं यशसे दद्यात् नभयान्नोपकारिणे ॥
न नृत्यगीतशीलेभ्यो हासिकेभ्यश्च धार्मिकः ।
पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ॥
असत्सु विनियुञ्जीत तस्मै देयं न तद्भवेत् ।
सञ्चयं कुरुते यस्तु समादाय इतस्ततः ॥
धर्मार्थं नोपयुञ्जीत न तं तस्कर मर्चयेत् ।
यस्मै दद्याद्विजा ! यस्य नत्वा तमुरसी नरः ॥
दानञ्च हृदि संचिन्त्य जलमध्ये जल क्षिपेत् ।
वदन्ति मुनयो गाथां परोक्षे दानमत्फलम् ॥
परोक्षे चैव यद्दानं प्रत्यक्षात्कोटिगो भवेत् ।
पात्रं मनसि सञ्चिन्त्य गुणवन्त मभीप्सितम् ॥
अप्सु ब्राह्मणहस्ते वा भूमावपि जलं क्षिपेत् ।

दानकाले तु समाप्ते पात्रे चासन्निधौ जलम् ॥
अन्यविप्रकरे दद्याद्दानं पात्राय दीयते ।
विष्णुस्ते तारयायास्तु श्टल्लन्ति हि करोदकम् ॥
तद्दानं ब्रह्म संप्राप्त मक्षय्य मिति विष्णुगाः।
लक्ष्मीष्टष्टा च यद्दत्तं दरिद्रायार्थिने द्विज ।॥
तदक्षय्य समुद्दिष्ट मिति पराशरोऽब्रवीत् ।
राज्यभ्रष्टञ्च राजानं यस्तु राज्ये निवेशयेत् ।
विष्णुलोकसमं भुज्य भवेत्पतिर्दिवौकसाम् ॥
प्रतिश्रुत्य द्विजार्थे यो न यच्छति च तं पुन ।
न च स्मारयते विप्र स्तुल्यन्तदुपपातकम् ॥
प्रतिश्रुत्य तु यत्किञ्चिद्द्विजेभ्यो न ददाति य ।
स वै द्वादश जन्मानि शृगाली योनिमाप्नुयात् ॥
धेन्वादीनि प्रवक्ष्यामि यथा लक्षणशीलितान् ।
मानभूमितिलादीना यथावत्ता निबोधत ॥
अजातदन्ता या तु स्यात्पूर्णदन्तसमन्विता ।
वर्षादर्वाक् चतुर्थाच्च यावदेतत प्रकीर्तिता ।
सुशीला च सुवर्णा च अरोगा च यशस्विनी ॥
सुवत्सा प्रथम सुता दृष्टिगैरभिधीयते ।
अरोगा या परिक्लिष्टा प्रथमप्रसूतिका ॥
सुता सातिभयोयुक्ता सा गोमामान्यत स्मृता ।
पूर्वोक्तगुणसयुक्ता प्रत्यग्र प्रसवा तया ॥
साथ गोर्विनुरित्युक्ता वाशिष्ठस्त्वचो यथा ॥
पञ्चगुञ्जो भवेन्माष कर्ष षोडशभिस्तैः ।
तैश्चतुर्भिः पलं प्रोक्तं दाने मान च पुण्यदम् ॥

माषकस्तै चतुर्भिश्च वेतिकेति प्रकीर्तिता: ॥
ताभिश्चतसृभि' प्रस्थश्चतुर्भिराढकैश्च तैः ।
द्रोणश्चतुर्भिस्तै रुक्तो भाव्यमानं प्रकीर्तितम् ॥
तैलप्रसृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते ।
तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्चवैफलम् ॥
पातैश्चतुर्भिः स्यात्कुम्भी पांटी तत्र चतुष्टयम् ।
कारक चतसृभि स्ताभिश्चतुर्भिस्तैर्घट' स्मृतः ॥
इत्येते कविभि मोक्त एतगोतिलगोसमा. ।
किञ्चिन्न वक्तनोक्तेन दानस्य तु पुन पुनः ॥
दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम् ।
सकृद्दधाय विप्राय भक्त्या परमया वसु ॥
दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने ।
अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु ॥
तथा निष्फलजन्मानि तथा तव निबोधत । •
वृथा जन्मानि चत्वारि वृथा दानानि षोडश ॥
तानि पृथक् प्रवक्ष्यामि निबोध त्व द्विजोत्तम ।
अपुत्रस्य वृथा जन्म ये च धर्मबहिष्कृता. ॥
दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च ।
अपुण्यस्थाने यद्दत्त वृथादानं प्रकीर्तितम् ॥
आरूढपतिते दानं अन्यायोपार्जितञ्च यत् ।
व्यर्थं मब्राह्मणे दानं पतिते तस्करेऽपि च ॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके ।
ब्रह्मबन्धौ च यद्दान यद्दत्तं वृषलीपतौ ॥
वेदविक्रयिणे चैव यस्य चोपपतिगृहे ।

स्त्रीजिते चैव यद्दत्तं व्यालग्राहे तथैव च ॥
परिचारके तु यद्दत्तं वृथा दानानि षोड़श।
तमोवृत्तं यो दद्याद्भयात् क्रोधात्तथैव च ॥
विद्वद्वृत्तं हि लब्धं भुङ्क्ते गर्भस्थ एवहि।
ईर्ष्यया मन्युना दानं यद्दानमर्थकारणात् ॥
यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते।
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते ॥
अप्रमेयगुणं तद्धि उपतिष्ठति यौवने।
यत्सुहिमाय ह्यदात् भक्त्या परमया वसु ॥
दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके।
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम। ॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्गमभीप्सता।
भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम् ॥
करे स्त्रियं तथा कन्यां दासदासीं तथा द्विजः।
करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः।
आरुह्य च गजस्तोक्तकर्णस्त्वाश्वः प्रकीर्तितः ॥
तथा वैकशफानाञ्च सर्वेषामविशेषतः।
प्रतिगृह्णीत गां शृङ्गे पृष्ठकृष्णाजिनं तथा ॥
कर्णजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः।
प्रतिग्रहं तथोष्ट्रस्य आरुह्यैव तु पादुके ॥
ईषायान्तु रथो ग्राह्यः सर्वं दण्डे तु धारयेत्।
द्रुमाणामथ सर्वेषां मूले न्यस्तकरो भवेत्।
आयुधानि समादाय तथामुष्य विभूषणम्।
धर्मध्वजं तथा स्पृष्ट्वा प्रविश्य च तथाम्बरम् ॥

अवतीर्य तु सर्वाणि जलस्थानानि यानि नु ।
उपविश्य च शय्यायां स्पर्शयित्वां करेण वा ॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत् ।
कन्यादाने तु च पठेद् द्रव्याणि तु पृथक् पृथक् ॥
प्रतिग्रह द्विजश्रेष्ठ। मृषेषाञ्च भवन्ति ते ।
द्रव्याणामथ सर्वेषां द्रव्यसञ्चयणान्नरः ॥
वाचयेज्जलमादाय भृङ्गारेण प्रतिग्रहम् ।
प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम् ॥
सद्रव्यस्तेन्यसयुक्तो नरकं प्रतिपद्यते ।
अथापि वक्ष्यामि विधिं विशेष वाजिदानतः ॥

दाहग्रहीतारमि येन पुण्य स्वर्गाय जायेत श्रृणुध्वमेतत् । गृह्णीत यो ऽश्व विधिवद्द्विजेन्द्र कुर्य्यादसौ पञ्चदिनानि पूर्वम् ॥ पञ्चोपचारैर्युतविष्णुपूजां कुष्माण्डमन्त्रैर्घृतदुग्धहेम । यद्वाम इत्यादि गहत्तीय सौङ्कारभूरादिभिरन्वितं च ॥ प्रत्येकमष्टौ जुहुयाद्विजाग्र्यः । तदा तथामानसयेद्विजेन्द्रः ।। सौर्येण मन्त्रेण च तद्वदष्टौ पश्चात् प्रयुक्त विशतं जुहोति ॥ कुर्य्याञ्च गायत्र्यजपं सहस्रं पश्चात्प्रगृह्य तुरगं द्विजेन्द्रः । दातापि चैतद्व्रतमाविदध्याद्विजाग्र्यवत्प्राक्तनयोर्विशुद्धौ । तावप्यमू सूर्य्य जल लभेते अत्रापि पूज्यौ द्विजवृन्दमध्ये ॥

अश्वप्रतिग्रहविधि ।

पुराणगीता सु भवन्ति गाथा विशिष्ट पुण्यप्रतिपादनाय ।
तिथौ प्रदत्त द्विज। यत्र पूर्वं क्रमेण चैतं पुनरुच्यतां तु ॥
श्रावणे शुक्लपक्षे तु द्वादश्यां दीयते द्विज । ।
गोप्रदानेन गोविन्दो वन्द्यत्येतन्मनीषिणः ॥

पक्षे शुक्ले तथा वत्स। द्वादश्यां घृतधेनुकाम्।
घृतार्चिः प्रणतार्यात्र प्रदद्यात् फलदायिनीम्॥
तथैव माघद्वादश्यां प्रदद्यात् तिलगौर्द्विज।।
केशवं प्रीणयत्याशु सर्वान् कामान् प्रयच्छति॥
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम्।
दत्त्वा विप्राय विधिना प्रीणयत्यम्बुशायिनम्॥
यत्र वा तत्र वा काले यदा तदा प्रदीयते।
विशेषार्थमिदं प्रोक्तं नान्यत्काले निषेधनम्॥
विष्णुमुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते।
भवेत्तदक्षयं दानं उक्तमत्यक्षरैरिदम्॥
काले पात्रे तथा देशधन न्यायार्जितं तथा।
यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम्॥
चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे।
यद्दत्तं कथितं सर्वं तदप्यर्के विशिष्यते।
द्वादशी पुण्यशुक्लासु विशेषाच्छ्रवणेन तु॥
यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम।।
वैशाखे शुक्लपक्षे तु विशेषादपि मानव:॥
आषाढी कार्त्तिकी चैव फाल्गुनी तु विशेषत:।
तिस्र एता: पौर्णमास्यो दाने विप्र। महाफला:॥
व्यतीपातेषु सर्वेषु समस्तेषु द्विजोत्तम।।
ग्रहसंक्रमकाले तु तीव्रदस्त्रे विशेषत:॥
तुला मेषप्रयोगेषु योगेषु मिथुनस्य च।
देवैर्महाफलं दानमेभ्योऽपि स्यान्महाफलम्॥
यदा प्रविशते भानु मकरं द्विजसत्तम।।

आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥
द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम्।
मिथुनञ्च तथा कन्यां धन्विनं मीनमेव च॥
प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम।।
षड़शीतिमुखं नाम दशमे दिनचतुष्टयम् ॥
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तम।।
संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्तितम् ॥
एताश्च विविधाः प्रोक्ताः स्नानश्च कार्य्यं यथोदितम्।
सर्वास्वपिहि सद्भिरिदं धर्मं सभीप्सुभिः॥
सप्तद्वीपेषु द्विज नालकश्चि मिद्धार्थमुक्तानि कियन्ति विप्र।।
दानानि वक्ष्यामि अथ पूर्त्तधर्मं प्राधेन पुंसोऽविद्दितेन धर्मः।
ब्रह्मेशहरिसूर्याणां स्कन्दे भास्याश्विने तथा।
ईशदुर्गाग्रहाणाञ्च स्थशाथि कारयेन्नरः॥
इष्टकामयतं वापि यश्चार्पयति विष्णवे।
अनेन विधिना कुर्यात् विष्णुलोकं संवाप्नुयात् ॥
एवं यः सर्वदेवानां मन्दिरं कारयेन्नरः।
स याति वैष्णवं लोकं परितुष्टो हरिर्नरः॥
समाचरति यो भग्नं सुधया लेपयेत्तथा।
शुभ्रं पतिश्च यस्तु विशिष्टे देवलेपने॥
सम्मार्जयति यस्तु यथाचैवानुलेपयेत्।
प्रदीपन्तत्र योदद्यात् स याति विष्णुलोकताम् ॥
पूजयेद्यस्तु विधिना पञ्चोपचारसंयुतः।
स विष्णुलोकमभ्येति क्रीडते च चतुर्भुजे॥
यावन्तत् श्रेष्ठिकास्तत्र वित्तदैवस्य सद्मनि।

तावन्त्यब्दसहस्राणि विष्णुलोके समाविशेत् ॥
स नित्यन्तत्तडागानि पुष्करिण्यश्च दीर्घिकाः ।
तथा कूपाश्च कर्त्तव्या वाप्यश्च गृहमेधिभिः ॥
खातमात्रेषु कर्त्तव्यं एकादिकजलं नरैः ।
यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृप्ती भवेत् ॥
पिबन्ति सर्वसत्वानि तृषार्त्ता अम्भसामिव ।
गण्डूषानि तु तावन्ति तत्कर्त्ता तत्समगन्दिवि ॥
यावन्ति ह्युपकुर्वन्ति गण्डूषानि क्रि नु च ।
कुर्वता स्नानशौचादि यावदाचमनं तथा ॥
तावत्संख्यानि वर्षाणि लक्षाणि दिवि मोदते ।
अथ स च विशेत् स्वर्गं सेव्यमानोऽप्सरोगणैः ॥
आरामाश्चापि कर्त्तव्याः शुभक्षै. सगोभिरैः ।

न्ति खादन्ति फलानि हृत्वा क्षुदर्दितस्तु अन्नपानम् ।
णि तावन्ति वर्षाणि नाके स्त्रीभिः कर्तृपुरुषाः स्वर्गे सेव्याः ॥
णि यावन्ति च पुष्पाणि दिवौकसां मूर्ध्नि धरातले वा ।
न्ति तावन्ति च वर्षाणि कल्याणि कर्तृदिवमारुहन्ति ॥
ालपत्रैर्मधुरैरव च भाजनैः फलैर्नानावर्णा ।
णि सत्वानि समर्पयस्व ततश्चान्नदानेन च इच्छनायान् ॥
त्र विष्णुं जगतामधीश नारायण यत्पुरुष करोति ।
न्यमाप्नोति कृत तु तस्मादनन्ततो भवान पुराण ॥
ानि सर्वाण्यभिधाय विद्वन् ! नष्टस्य पूर्तं गृहमेधिकर्म ।
न्तिशान्ति मनुजाः शुभाय वक्ष्यामि ततस्त्वादयमर्थशान्त्यै ॥
उक्तानि सर्वदानानि इष्टापूर्तेषु सत्तमाः ।
अतः परं प्रवक्ष्यामि गणेशादिकशान्तय ॥

इति श्रीवृद्धहारीतीये धर्मशास्त्रे सुव्रतप्रणीतायां धर्मसंहितायां दानधर्मेषु पूर्त्तविनिर्णयो नामाष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः ।

शान्तीनामथ सर्वासां ग्रहशान्तिः परा स्मृता ।
ग्रहेभ्योऽपि गणेशस्य तस्य शान्तिरथोच्यते ॥
यदि सुहृत्कृतकर्माणि भवन्ति फलदानि हि ।
तदा धर्मार्थकामाश्च सिध्येरन् सदा श्रयाम् ॥
तमृषिः क्रियमाणानां सर्वेषां कर्मणामयम् ।
विघ्नार्थमसृजद्ब्रह्मा ब्रह्मरथं विनायकम् ॥

तेनोपहतपुसान्तु कर्म स्यान्निष्फलं कृतम्।
स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम्॥
जलावगाहनं स्वेन कव्याद्गारोहणं तथा।
परोष्ट्रम्लेच्छसंसर्गं गुड़कापायवाससम्॥
पश्यन्त्यात्मानमेवेह क्रीदन्तं प्रतिवासरम्।
यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि॥
राजपुत्रो न राज्यांशा यद्यापा न तु कन्यका।
अन्तर्वत्नी न पत्यांशा श्राचार्यं तु न सा द्विज!॥
अधीयानास्तु विद्यांशा कृषिक्षत्सस्यसम्पदा।
वणिग्वर्त्तनलाभेन युज्यन्ते तद्वतश्च सन्॥
तस्मात्तदुपशान्त्यर्थं समभ्यर्च्य गणेश्वरम्।
स्नपनङ्कारयेत्तस्य विधिवत्पुण्यवासरे॥
स्वासनासीन मस्नाप्य श्वेतकार्पभपर्मणि।
सितसर्षपकल्केन साज्येनाच्छादितस्य च॥
विलिप्त शिरसंस्तस्य गन्धैः सर्वौषधैः।
अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान्॥
एकवर्णैश्चतुर्भिश्च पुष्पैः कुम्भैश्च यज्जलम्।
समानीत क्षिपेत्तत्र वक्ष्यमाणश्चरस्त्विमाः॥
अश्वेभस्थानवल्मीके ह्रदसङ्गमवृत्तिका।
रोचनां गुग्गुलं गन्धान् क्षिप्तमम्भसि तान् क्षिपेत्॥
यत्ते द्वैपायनस्थान महस्राक्ष ऋषिस्मृतम्।
तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः॥
नपाभि. पावमानीभिः कुम्भान्तमभिमन्त्रयेत्।
भगाद्दिग्गदिक्पाला भद्रीमके गवाद्यः॥

श्रामस्ते ममतु दौर्भाग्यं शान्ति ददतु सर्वदा।
सुचिचियान इत्यादी मन्त्रैर्नैकाभिषेचनम् ॥
वदन्ति वदतां श्रेष्ठाः दौर्भाग्यस्योपशान्तये।
समुद्रा गिरयो नद्यो मुनयश्च पतिव्रता ॥
दौर्भाग्य ममतु मे सर्वे शान्तिं यच्छन्तु सर्वदा।
पादजङ्घोरुजङ्घाश्च नितम्बोदरनाभिषु ॥
स्तनांसे बाहुहस्ताग्रग्रीवा श्रंसाङ्गसन्धिषु।
नासा ललाटे कर्णभ्रू केशान्तेषु च यत्स्थितम् ॥
तदपो ममतु दौर्भाग्य शान्ति यच्छन्तु सर्वदा।
स्नातस्य मस्तके दर्भान् सव्येन परिगृह्य तु ॥
शुक्लयात्मसर्पपत्तैलमौदुम्बरस्रुवेण तत।
मितय समितश्चैव तथा शालकटङ्कटौ ॥
कूष्माण्डौ राजपुत्रश्चेत्यन्तस्वाहा समन्विते।
नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः ॥
चतुष्पथे समाश्रित्य सूर्पे हुत्वा कुशास्तत।
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान् ॥
ओदनं पललोपेतं यत्कामान्मत्स्यकानपि।
तथा मांसश्च कुल्माषान् तत्रैव त्रिविधा सुराम्।
हरिकेन्दरेरिकान् पूपान् फलानि मूलसंस्कृतः ॥
गच्छेत् स मातुः पार्वत्याः कुर्यादुपस्थिता पुनः।
दूर्वासर्षपपुष्पैश्च पूर्णमार्घाञ्जलिं क्षिपेत् ॥
सौभाग्य मल्लिके। देवि भगरूप यशोऽपि च।
स्त्रियो युक्ताश्च कामाश्च तथा गौर्येव देहि मे ॥
गणेशमातः। रक्षाले। यत्किञ्चिन्मदभीप्सितम्।

एतच्चाम्बे ! च तद्देहि देहि गौरि । वरान् वरान् ॥
अनसु वाससी शुक्ले परिधायाच ते शुभे ।
सितचन्दनलिप्ताङ्ग सितस्रग्भूषणान्वितः ॥
तान् नत्वा द्विजान् सर्वान् भोजयेद्विविधाशनैः ।
वस्त्रयुग्मं गुरोर्दद्यात्तेतु तस्य वराशिषः ॥
एतानि सम्पूज्य गणाधिदेव विघ्नोपशान्त्यै जननी तथास्य ।
स्नात्योक्तसम्यग्विधिना समासात्प्राप्नोति चान्यान्मनसा यमिच्छेत्॥
स्नात्वा विधायार्चनमम्बिकायाः सम्पूज्य लोकान् सखिबन्धुलोकान् ।
आचार्यदृष्टान्वनिताकुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम् ॥
मृत्युञ्जयमन्त्रैर्विधिवत्स शुक्ते नित्यं द्विजानन्दनपूजनं च ।
स्तान्तरायान्विनिहत्य सर्वान् कुर्यादथातो ग्रहयागमेनम् ॥

इति श्रीबृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा ॥

पीतौ ब्रह्मा सुराचार्य्यः शुक्लः शुक्रो भृगूद्वहः॥
कृष्णः शनीरवेः पुत्रः कृष्णो राहुः प्रजापतिः।
कृष्ण केतुः समाप्तश्च कृष्णयापाख्ययोऽग्रमी॥
कालगोऽयं पुनः सौम आवन्त्यः सोम उच्यते।
मागधो बुधइत्युक्तो गौतमस्तु बृहस्पतिः॥
सैधवोदानवाचार्यसौरिसौराष्ट्रदेशजः।
राहुशङ्कलदेशोत्थो मध्यदेशभवोऽग्निभूः॥
जन्मदेश इमे प्रोक्ताः ग्रहजातकवेत्तृभिः।
शम्भु रविं पुमान् चन्द्र स्कन्दभौमं हरिं बुधम्॥
ब्राह्मणञ्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम्।
काल राहुं चित्रगुप्तं केतुं मित्यधिदैवतम्॥
एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत्।
अर्कस्त्वर्काय होतव्यः सर्वव्याधिप्रणाशनः॥
सुधाशुचे च सोमाय पालाशः सर्वकामिकः।
खदिरस्त्वर्थलाभाय मङ्गलाय विवेकिभिः॥
स्वरूपकृदपामार्गो होतव्यश्च बुधाय च।
प्रभाप्रदस्तथाश्वत्थो होतव्योऽमरमन्त्रिणे॥
अजी सौभाग्यकृद्देया दैत्यामात्याय सद्द्विज।
धर्मविद्यार्थकृद्भानु स द्विजे वङ्किसूनवे॥
दधिक्षीराज्यसंमिश्राः समिधः शुभदस्त्वये।
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने॥
दीर्घायुर्धर्मकृद्दूर्वा होतव्या राहवे द्विज।
मातृमातृका सर्वा घटा बटे.फार शतम्॥
अष्टाविंशतिरेवोक्तं सङ्ख्यया प्रतिदैवतम्।

दद्यात् फलभूयस्त्व मुक्तादन्यत्र राघवम् ॥
नव भुवनकं लेख्यं चतस्रं मण्डलं द्विज ! ।
ग्रहांस्तत्र प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु ।
मध्ये तु भास्करः स्थाप्य पूर्वदक्षिणतः शशी ।
दक्षिणेन धरासूनुः बुधः पूर्वोत्तरेण तु ॥
उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः ।
पश्चिमायां शनिः कुर्य्यात् राहुर्दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात् ।
पटे वा मण्डले लेख्या ईशान्यां दिशि पावकान् ॥
भास्करः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः ।
सोमसूनु सुराचार्यौ स्वर्णयोभौ प्रकीर्तितौ ॥
रजतो भृगुपुत्रस्य कार्णाश्च स शनैश्वरः ।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यकः ॥
सर्वानितन्मया कृत्वा समभ्यर्च्य सदा गृही ।
लेपयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा ॥
ग्रहाणां साधिदेवानां प्रतिष्ठापन मन्त्रकान् ।
यदुक्ता मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम ! ॥
आदित्यं गर्भमित्युक्त मग्निं दूतमनेन वा ।
एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम् ॥
अप्स्वन्तरीति गौरीगुः गौरी त इति पार्वती ।
स्योना पृथ्वीति भौमस्तु य इन्द्र देति वा गुहम् ॥
इदं विष्णुः बुधः स्थाप्य तद्विष्णोरिति वै हरिम् ।
इन्द्र श्रागां सुराचार्य्य ब्रह्मज्ञानं निबोधकम् ॥
इन्द्र देवी धर्माः सूनु सर्वमित्यम्बराधिकम् ।

शन्नो देवी रवेः स्तुतं यमाय त्वा तथा यमम् ॥
अथ गौरिति राज्ञश्च काल कार्षीरसीति च ।
ब्रह्मजज्ञेति केतुश्च चित्र चित्रावसोरिति ॥
व्रुयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे।
आकृष्टेन च तीव्रांशोरिमन्देवा निशाकरम् ॥
अग्निमूर्धेति भूसुनोरुद्बुध्यस्व बुधस्य च ।
बृहस्पतेरिति गुरो रन्नात्परिस्रुतो भृगोः ॥
शन्नो देवी शनेर्गन्तुः काण्डात् काण्डात्तरस्य च ।
केतु कृण्वनग्निस्तुतुरयमश प्रकीर्तितः ॥
वेदमन्त्रैः सदा पूज्या विधिना ते द्विजन्मना ।
कर्त्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिला ।
मध्यमानामिकामूललग्नाङ्गुष्ठ चतुर्भिः ॥
यावन्तोऽङ्गुलिभिर्ग्रासा स्तिला स्तावत्तवाङ्गनिम् ।
हस्तमात्रं पृथिक्के न वेधोऽपि तावतैव तु ॥
याङ्गमात्र वद्रत्नके एके एके चारत्निमाकम् ।
चतुरस्र घनेत्कुण्डमेकयोनिसमन्वितम् ॥
शुभमेखलया युक्तं सुशान्तिकरमुत्तमम् ।
होमार्थं मण्डलं कुर्याच्चतुर्द्वारसमन्वितम् ॥
चतुर्दिक्षु ध्वजा कार्या नानावर्णाः शुभावहाः ।
तथा ततोदकुम्भाश्च दूर्वापल्लवसंयुता ॥
पुनर्नवीकृत पद्म मण्डपाभावमाश्रयेत् ।
षट्कर्मनिरताः शान्ता ये न दम्भाः प्रतियहे ॥

नियोज्यास्तेऽग्निकार्यादौ स्फुरन्मन्त्रा द्विजोत्तमाः।
प्रतिग्रहा निरम्बश्च जपहोमादि कुर्वतः॥
यस्य मन्त्राणि वीर्याणि तत्कृतं कर्म निष्फलम्।
ओदनं सगुडमार्नोः पायसं शशिनं स्तथा॥
हविष्यं भूमिपुत्रस्य क्षीरान्नञ्च बुधस्य च।
पूर्णं हविः शनैः केतौ मांसं राहो. घृताक्ततम्॥
चित्रान्नमग्निसूनोश्च भाज्यानामपि यस्य याः।
होमं कृतस्तथान्येऽपि सदृष्टत्ताय द्विजाग्रजाः॥
यथावर्णानि वासांसि देयानि कुसुमानि च।
देया गन्धाय सर्वेषां देयो धूपश्च गुग्गुलः॥
धेनुः शङ्खो वृषः स्वर्णं वासोश्वश्चासिता च गौः।
आविन्ध्यागलकश्चैव क्रमशो दक्षिणाः स्मृता॥
प्रत्यहं प्रतिमासञ्च प्रत्यब्दं वा विधानतः।
वर्णिभिश्च ग्रहाः पूज्या राजभिस्तु सदैव हि॥
दुःखितो यस्य यस्तु स्यात् पूज्यस्तस्य स यत्नतः।
वेधसैते नियुक्ता. प्राक् स्वभक्तं पूजयिष्यथ॥
वरं ददाति सन्तुष्टा किम्ना अग्नि र्नृपा ग्रहाः।
त्वसंन्तुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा॥
ग्रहाधीनमिदं सर्वं उत्पत्तिप्रलयात्मकम्।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहाः॥
सानुकूले ग्रहैर्यानि कुर्यात्कर्माणि मानवः।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा॥
कुर्वन्ति चैतद्विधिना ग्रहाणां सातिथ्यमब्दं प्रतिवासरं ये।

आरोग्यदेहा धनधान्ययुक्ताः दीर्घायुषः स्त्रीयुताश्च भवन्ति ॥

इति श्रीवृद्धहारीतीये धर्मशास्त्रे ग्रहशान्तिर्नाम शान्त्यध्यायः ।



वसेत्स कस्मात्सदनेष्वतोऽद्भुतं क्योवसेयुर्यदरण्यवासिनः ।
विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकसकाकवायसाः ॥
तरक्षुगोमायुवृगायुगोभि-
र्द्विशाप्यकस्मादकुतोऽपि निर्भयः ।
विशन्ति यत्त्वेतदतीव चाद्भुतम्
गृहे पुरे तच्छनिशते हि सिद्धये ॥
अथाद्भुतानि जायन्ते वर्णानां गृहमेधिनाम् ।
नानाविधानि तेषान्तु प्रशान्त्यै शान्तिरिष्यते ॥
यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत् ।
धनधान्यक्षयो वापि पुत्रभार्य्याक्षयस्तथा ॥
भयञ्च जायते शत्रो राज्ञो वा जायते भयम् ।
शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः ॥
यदि गोधूमशाखायां यवशाखोपजायते ।
यवगोधूमशाखायां देवसर्वाशनेषु च ॥
सर्षपे तिलशाखा च तिले शाखासु सर्षपम् ।
माषे मुद्गस्तु मुद्गे स्यात् असृग्वृष्टिर्भवेद्यदि ॥
अम्भः पूर्णे तु कुम्भे तु ज्वलदग्निर्यदीक्षते ।
उद्वमनन्तु कूपानां मक्षी वा मधुजालकम् ।
विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम् ॥
महावाताय वाताय तद्दद्यं प्रशाम्यतु ।

त्रिपञ्चसप्त वा कृत्वा सर्वत्र ह्यत्र तुल्यता॥
स्त्रियो गौर्वा महिष्यावा सुतौ वत्सौ च मण्डकौ।
द्वौ द्वावाशु प्रजायेते तत्र शान्तिर्विधीयते॥
वृषपङ्क्तोद्वयं नश्येत् वडवाश्ववदाहरेत्।
अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च॥
मृदङ्गपटहादीनामकृतोऽपि ध्वनिर्यदा।
काकगृध्रकपोताद्याः प्रविशेयुर्गृहे पुरे॥
यवपिष्टेन निर्लिप्य विधिवद्वारुणं वरम्।
मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय तम्॥
महावरुणदेवाय ह्यपाञ्च पतये तथा।
अन्यैर्वरुणदैपत्यैर्मन्त्रैश्च जुहुयाच्चरुम्॥
विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय तम्।
अन्यस्य तुल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः॥
इन्द्रचापेक्षणं रात्रौ प्रस्नमज्वलनन्तथा।
गजस्य मदवस्थाना ज्वलनं प्रतिवीक्षणम्॥
स्थूणाप्ररोहणं यत् स्याद्भाण्डस्थानप्ररोहणम्।
विद्युन्निर्घातवज्राणां पतनं वा भवेद्यदि॥
गदाकुद्दालसंसर्गं विपरीतप्रदर्शनम्।
शुभाय चरुराग्नेयो निर्वाप्यो विधिवद्विजैः॥
अग्नये त्वग्निराजाय महावैश्वानराय च।
हृदये मम यच्चैतत्सर्वत्र च वदेद्बुधः॥
गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च।
दक्षिणा सप्तमा गौस्तु यत्नदुरम हिजायते।

एतेषु चान्येष्वपि चाद्भुतेषु जातेषु सावित्रजपं सहस्रम्।
होमं विदध्यादपि विष्णुमन्त्रैर्ब्रह्मेशमन्त्रैरपि वा द्विजोत्तमैः॥

इति श्रीवृहत्पाराशरीये शान्त्यध्याये अद्भुतशान्तिः।



अभिधास्येऽथ रुद्राणां शान्तये स्वहमेधिनाम्।
यस्यानाच्च विधानन्तु यत्कृतं हन्ति पातकम्॥
ब्राह्मणो विधिवत् स्नात्वा सर्वोपद्रवनाशनम्।
कुर्य्याद्विधानं रुद्राणां यजुर्विधाननिर्मितम्॥
इषेत्वादिषु मन्त्रेषु स्व ब्रह्मा तेषु या क्रिया।
दशप्रणवयुक्तेषु भूर्भुवः स्वरितीति च॥
आर्षच्छन्दश्च दैवत्यं न्यासश्च विनियोगतः।
पराशरोदितं वच्मि शेषं मुनिविभाषितम्॥
मनोज्योतिरबोध्याग्निमूर्धानश्च मर्माणि ते।
मानस्तोक इतिश्चैतत्प्रथमं पञ्चकं स्मरेत्॥
याते रुद्रेति वु आयाशिरोऽस्मिन्महदर्णवे।
असंख्यातसहस्राणि ललाटे विन्यसेद्बुधः॥
चक्षुषोर्विन्यसेद्धेतु त्र्यम्बकञ्च यजामहे।
मानस्तोक इति चैतन्नासिकाया न्यसेद्बुधः॥
अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले।
नमस्त आयुध इत्येतत्सरे मन्त्रप्रकोष्ठके॥
विन्यसेद्बाहुमन्त्रोऽयं ये तीर्थानिति हस्तयोः।
नमोऽस्तु किरिकेभ्यो वै हृदये मननाशनम्॥
ताभ्यां विद्वान् न्यसेत् पार्श्वे नमो हिरण्यबाहवे।

गुह्यमन्त्रन्तु सस्मार्य इमा रुद्राय इत्यपि ॥
मानो महान्तइत्योर्वो एष ते रुद्रेतिजानुनोः ।
अवरुद्रमिति ह्येतज्जङ्घयोर्मन्त्रमुच्चरेत् ॥
कवचे मध्यमेतद्धि तदुपरिस्थित इति ।
नेत्रन्तु नीलग्रीवाय प्रमुञ्चनं मनोऽग्रकम् ॥
य एतावन्त एतेन विदध्युर्दिक् प्रबन्धनम् ।
ॐमितिच नमस्कारभवा च ते ततः पुनः ॥
रुद्रायेति विधानज्ञो दशाक्षरन्तदा न्यसेत ।
प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे ॥
मोकारन्तु ललाटे तु भकारं मुखमध्यतः ।
गकारं कण्ठदेशेतु वकारं हृदये न्यसेत् ॥
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ।
द्राकारं नाभिदेशेतु यकारं पादयोर्न्यसेत्॥
त्रातारमिन्द्रं त्वत्याग्ने सुगन्ध पत्न्यानमिति स्मापि ।
तन्वा यामि वदेद्दानो नियुद्भिरित्यपीरयेत् ॥
वयं सोम तमीशानं यस्मैरुद्रा इति स्मरेत् ।
स्योना पृथिवी ह्येतत् कुर्वीत सपुटं द्विजः ।
धुत्रामादिदिशांपालान् प्राच्यादिषु स्मरेदथ ॥
रौद्रीकरणमेतद्वै कृत्वा पापैः प्रमुच्यते ।
यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः ॥
दुष्टदैत्याश्च शाकिन्यो वैयन्त्यो ह्यकाश्च याः ।
मिथ्याभाटयोऽरख्या येदुष्टाःपदहा निजाः ॥
म्लेच्छयक्षचोराद्या यमदूतस्तथाकयः ।
रौद्रभूतमिमं सर्वे द्विजं पश्यन्ति वह्निवत् ॥

देदीप्यमानमर्चिर्भिर्दुष्टदृग्वधकारकः ।
दह्यमानो दवीयः स सप्तधामसु धामभिः ॥
प्रणश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः ।
पञ्चास्यमैशमात्मानं सर्वाभरणभूषितम् ॥
मृगलाञ्छनमूर्धानं शुद्धस्फटिकसन्निभम् ।
फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम् ॥
सप्तार्चिर्व ज्वलज्ज्वाल जटाजूटकिरीटिनम् ।
सहस्रकरपादाब्जपद्माङ्गविभूषितम् ॥
ब्रह्माण्डखण्डवक्त्रारं नृकपालकधारिणम् ।
देदीप्यमानचन्द्रार्कज्वलदग्निविनेत्रिणम् ॥
त्रैलोक्यज्योति कङ्कालस्त्वन्यकपालमालिनम् ।
दीप्तनववमालाभदन्तमल्लाधरद्विज ॥
निःशेषवारिसम्पूर्णं कमण्डलुधरं ध्वजम् ।
जगत्व्याधियन्त्रादण्डमेककधारिणम् ॥
केयूरबद्धनागेन्द्रमूर्धमणि विराजितम् ।
विचित्र किङ्किणी माला मुक्ताराव विराजितम् ॥
घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम् ।
सहेमपट्टनीं लाभ व्याघ्रचर्मोत्तरीयकम् ॥
विद्युल्लताप्रभागङ्गं शुभ्रमूर्धसुरार्चितम् ।
समस्त भुवनाभाव धरणीच्छासनस्थितम् ॥
त्रैलोक्यवनितामूर्धानं तद्देहार्धगं पार्वतीम् ।
लक्षसूर्यप्रभाभास्वत् त्रैलोक्यक्षतपाण्डुरम् ॥
अमृतप्लुत रुद्राङ्गं दिव्यभोगसमाकुलम् ।
दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम् ।

नित्यं शाश्वत मव्ययं व्यापिनं नन्दिनं ध्रुवम्॥
द्विजो ध्यात्वा भवात्मानं सम्यक् शब्दस्वरूपिणम्।
सप्तपद्यशान्ताग्रः सनातीयजनमारभेत्॥
अनुलिप्ते सुशुभ्रे च देशे गोचर्ममात्रके।
स्थण्डिलाम्बुजमालिख्य मन्त्रैः प्रक्षाल्य त पुनः॥
तत्र पूजादिकं कुर्यान्नमश्च शाम्भवाय च।
मानो महा न इति च सिद्धमन्त्रं स्मरेद्द्विजः।
स ललाटे पुनर्ध्यात्वा तेजोरूपं पुनर्द्विजः।
दशाक्षरेण मन्त्रेण दद्यात्पाद्यादिकौ पुनः॥
न्यासमन्त्रैश्च सोङ्कारैर्मानस्तोक इति ह्यपि।
शम्भवे इति मन्त्रेण दद्याद्गन्धोदकादिकम्॥
पुष्पधूपश्च दीपादि यथालाभं निवेदिकम्।
दशाक्षरेण तेनैव ततः कुर्यात् पुनर्द्विजः॥
शिखां तस्य तु रुद्रस्योत्तरनारायण द्विजः।
शिरः पुरुषसूक्तञ्च शिवसङ्कल्पहृद्यकृत्॥
कवचञ्चाप्रतिरथं नेत्रविभ्राट् बृहत्पिबन्।
शतरुद्रीयमन्त्रेण दैवस्यास्त्रं प्रकल्पयेत्॥
पञ्चाङ्गानि स्मरेद्दृष्टप्रणवं पूजयेद्द्विजः।
उद्धृत्य प्रणवेनेत्थं विकिरन्द्रेति विसर्जयेत्॥
रुद्ररूपो द्विजो यश्च कुर्यात्तद्विच सिध्यति।
अक्षतान्वा तिलान्वापि यवान्वा समिधोऽपि वा॥
शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान्।
पञ्चपञ्चाथ षड्वाथ अष्टावष्टौ तथापि च॥
दशदशैकादश वा जुहुयात्साधको द्विजः।

द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः ॥
जपतर्पणहोमादौ रतो यो वत्सरं जपेत्।
दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः ॥
सौवर्णं पृथिवीदानं पुण्यभावः प्रजायते।
महापापोपपापैश्च मुक्तो रुद्रत्वमृच्छति ॥
एकादशगणान् रुद्रानावर्त्य याति रुद्रताम्।
रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः श्राद्धभुग्वरः ॥
वंशानां विंशतिश्चैकान्तारयेद्रुद्रजाप्यकृत्।
एकतो योगिनः सर्वे ज्ञातिभिः सह सद्व्रतैः ॥
एकतो रुद्रजापी तु मान्य सर्वस्वदैवतैः।
पावनञ्च पवित्रञ्च नाधिकं रुद्रजापिनः ॥
तस्मै दत्तं कृतमुक्तन्तदानन्त्याय कल्पते।
अथातः सिद्धिकामः सन् कन्दमूलफलाशनः ॥
गोमूत्रयावकक्षीर दधिशाकान्न भोजनः।
हविष्यभोजनो वास्मै विप्रायोत्पन्नभोजनः ॥
जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत्।
शिर. साहस्र रुद्राणां जप्तैर्दशशतैर्ध्रुवम् ॥
सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिण.।
सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः ॥
रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिता'।
एकादशशुभान् कुम्भानाहृत्य विधिसम्मितान् ॥
सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान्।
गन्धोदकाक्षतैर्युक्तानमस्कृत्वाऽभिमन्त्र्य च।
एकादशमहात्मान मन्त्र वा हितकाम्यया।

तीक्ष्णतैलप्लुतं सम्यक् मन्त्रान्ते भोचनम् परम् ।
फट्कारेण च जुहुयात् तयोरेवाचिराद्भवेत् ॥
जलमध्ये शतावर्त्त्या सद्योऽष्टिर्निगद्यते ॥
नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम् ।
कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो भ्रमम् ॥
नमः स्वस्य इत्यनेन मन्त्रेण तु सहस्रकम् ।
लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत् ॥
द्विगुणाम्पलाशसमिधं महावाणी प्रजायते ।
त्रिगुणां नवपद्मानां पाताले सिद्ध्यति ध्रुवम् ॥
चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते ।
समुद्रगा नदीतीरे पुलिने वा पवित्रके ॥
खड्गोपरि श्रीफलानां हुत्वा त्रिगुणसहस्रकम् ।
अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः ॥
छन्दोदैवतमार्षेयमथातः शतरुद्रिये ।
ध्यानेन कर्मसम्पत्त्व द्विजानां येन जायते ॥
आद्यानुवाके रुद्राणां आद्यायाश्च क्वचिद्द्विजः ।
छन्दोगायत्र्यमन्यास्तु अनुष्टुप्तिस्रु स्मरेत् ॥
पङ्क्तिस्तिस्रु विज्ञेया अनुष्टुप् तिस्रु स्मृताः ।
द्वयोश्च जगती विप्र उक्तमथानुवाककम् ॥
आद्यानुवाके प्रथमा बृहती जगती तथा ।
अनुष्टुप्च तृतीयाद्यां द्वयोस्त्रिष्टुप् स्मृता द्विज ! ॥
अपरास्तु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम् ।
रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः ॥
यज्ञाध्ययनादि षट्कैव शिवसङ्कल्पमार्षकम् ।

रुद्रस्तु देवता षट्सु विनियोगो जपादिषु ॥
अद्भ्यः सम्भृत इत्यादौ उत्तरनारायणस्त्रिषिः ।
पूर्वानुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्तितम् ॥
आशु शिशान इत्यादिरप्रतिरथ उच्यते ।
एतन्नाम्नामुनिस्तत्र देवतारामरेश्वरः ॥
दैवत्यमापतेत् स्तत्र छन्दस्त्रिष्टुप् प्रकीर्तितः ।
विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते ॥
एतत्सर्वमृषिन्यस्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत् ।
यद्यदारभते तत्तद्यथोक्तफलदम्भवेत् ॥
तदा ध्यायन् यत्पितॄणां श्राद्धानान्त्रिविशस्य च ।
प्रजानामायुषः कीर्तिर्भूयस्त्व रुद्रजापिनः ॥
इम पुण्य पवित्रञ्च रहस्यं पापनाशनम्।
रुद्रविधि विधिश्रेष्ठ ! कुर्याद्विप्रः शिवे रत. ॥
कुर्याद्य एवं विधिवद्विधानं शम्भोरजस्रम्प्रथित द्विजेन्द्रः । ।
प्राप्नोति नाकं स शिवस्य साक्षादत्रापि स स्याच्छिववत्स पूज्यः॥
मन्त्राणि सर्वाणि च स द्विजस्य आदेशकार्याणि भवन्ति यस्य।
यः साधयेत्प्रोक्तविधानयज्ञो मन्त्राभिपूज्य स तु शम्भुवत्स्यात् ॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये रुद्रशान्ति. समाप्ता।

---

मन्त्रान्तिनेव जुहुयाद्धुताशे योविल्वपत्रैर्घृतदुग्धयुक्तैः ।
मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकमेव ॥
पञ्चभागास्तथा पञ्च पञ्चेन्द्रा पञ्चवारुणाम् ।
पञ्चाहुतीर्जपित्वाथ सर्वपापैः प्रमुच्यते ॥

अथातः सम्प्रवक्ष्यामि तटागेष्टिविधिं शुभम्।
येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते॥
अस्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे।
तटागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्तितः॥
दीर्घिकासु तटागेषु संस्थितासु यो विधिः।
वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः॥
तस्माद्यः श्रुतवान् शक्तिसूनवेऽतः पराशरः।
तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रचक्षते॥
तटागादिनिपातानां यावदुत्सर्गेन कृतम्॥
तावन्न परकीयन्तु स्नानादीनामनर्हकम्।
अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा॥
अप्रतिष्ठितपाथानां प्रोक्तन्तोयमपेयवत्।
तदुत्सर्गः प्रकर्तव्यो निजवित्तानुसारतः॥
वित्तशाठ्यं प्रहेयं स्यादित्यब्रवीत्पराशरः।
तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः॥
तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह।
सतोयं न तु कर्त्तव्यः प्रतिधर्मविदृद्धये॥
विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम्।
तटागपालिपृष्ठेतु मण्डप तत्र कारयेत्॥
पूर्वोत्तरप्लवे देशे शुभे शौचसमाहितः।
चतुरस्र चतुर्द्वार दशहस्तप्रमाणिनः॥
स्वामिहस्तप्रमाणेन तोरणानि तु कारयेत्।
कार्याः विचित्राः पताका नानावर्णाः समन्ततः॥

मूअपल्लभसंयुक्ता द्वारेषु कलशाः स्मृताः।
यथावर्णं यथाकाष्ठं यथाकार्य्यं प्रमाणतः॥
तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया।
पालाशो ब्राह्मणस्योक्तो न्यग्रोधः चत्रियस्य च॥
वैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः।
शिरः प्रमाणं विप्रस्य स्याकण्ठ चत्रियस्य च॥
उरःप्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम्।
पूर्वस्य दक्षिणे भागे तोरणं तत्र कारयेत्॥
ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः।
तेषामुत्तरतः सोम कुवेर कुविदङ्गतम्॥
धनदं धननागेति दुर्गावास्येति शङ्करम्।
आकृष्टेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्पास्तया ग्रहाः॥
त्रातारमिन्द्रमितीन्द्र अग्निदं ते च पावकम्।
अग्निमृत्युरित्यादि धर्मविच्च द्विजोत्तमः॥
तद्विष्णोरिति वै विष्णु नमः सूतेति नैऋतम्।
सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिस्तथा॥
वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत्।
एतद्वा विंशतिः स्थाना निमन्त्रिताः पृथक् पृथक्॥
इमं मे तत्त्वसयन स्नात्वायामि स्वनुत्तमम्।
*समुद्रोऽसि समुद्रेति सौन् समुद्रानिति स्पृसि॥*
दयवारुणमन्त्रैस्तु आहुतीना शतद्वयम्।
सहस्रगतं शतं वापि त्रिगमष्टोत्तर गतम्॥
गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते।
चतासे चैव गा दद्यादिकामपि पयस्विनीम्॥

अरोगा वत्समंयुक्ता सुरूपां भूषणान्विताम्।
सौवर्णाराजतासाम्रा: कार्य्याः मीनाय भक्तित: ॥
मत्स्यनक्रादय: कार्य्याः विविधा: पूर्वहृद्वये।
गोवत्सौ वस्त्रवन्तौ च आग्नेय्यां दिशि संस्थितौ ॥
वायव्यभिमुखौ तत्र तारयेद्धारिमध्यत:।
वस्त्ररत्नानि त्रि: स्थाप्य छत्रिकामुद्रिकां शुभाम् ॥
गन्धान्वितै: प्रदातव्य विप्रान् प्रसाद्य भक्तित:।
इत्यादिभिश्च: सन्तोष्य छत्रोपानद्द्वमेव च ॥
सुहेम पुष्पसयुक्ता शय्या दद्यात्त भक्तित।
आसनानि च शस्तानि भाजनानि निवेदयेत् ॥
एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चित:।
प्रसादयेद्विजान् भक्त्या इष्टापूर्त्तं फल नर: ॥
कृताञ्जलिपुटो भूत्वा विप्राणामग्रत स्थित:।
ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रत्रपुङ्गवा: ॥
तदूयूयन्तारयध्व मा ससारार्णवतो द्विजा: ॥
आगता मम पुण्येन पूर्वपुण्यप्रसाधका:।
कूर्मश्च मकराश्चैव सौवर्णं तत्र कारयेत् ॥
मीनश्च राजतश्चैव ताम्रदर्दुरका: स्मृता:।
जलकुम्भचराद्याश्च सैन्धवास्तत्र प्रकल्पयेत्।
अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत् ॥
इम पुण्य पवित्रञ्च तटाकादिविधिं नर:।
खातयित्वा तटागानि स्वभावात् सम्प्रवर्जिता: ॥
मानव क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश।
एतद्विधान विदधाति भक्त्या सर्वेषु खानेषु तडागकेषु।

सर्वेश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान्॥
वदन्ति केचिद् वरुणस्य लोके प्रयाति लोकान् वरुणस्य कुम्भे।
सम्पूज्यता तत्र पुनर्धरित्र्यां नरेन्द्रतामेति पराशरोक्तिः॥
इति श्रीवृद्धपाराशरीये शान्त्यध्याये वापीकूपतटागादि शान्तिविधिः समाप्तः।

---

अथातः सम्प्रवक्ष्यामि नरेन्द्राः। श्रूयतामयम्।
लक्षहोमविधिः पुण्यः कोटिहोमविधिस्तथा॥
स्वयम्भूर्यमुवाच प्राक् अस्मत्तातपितामह।
तमिमं संप्रवक्ष्यामि श्रूयतां पापनाशनम्॥
ये वेद ब्राह्मणाः कार्य्या भूमिर्यावत्तु मण्डपम्।
समिधो याश्च सन्त्याश्च अन्यच्च तत्र यद्भवेत्॥
लक्षहोमविधिं विप्रा। कथ्यमानं निबोधत।
सुस्नाता ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः॥
नियमव्रतसम्पन्ना महिता पार्थिवेन तु।
नित्यं जपपराश्चैव नियोज्यास्तादृशा द्विजाः॥
कन्दमूलफलाहारा दुग्धक्षीराशिनोऽपि वा।
प्रागुदक् पूर्वदेशेषु समे स्थण्डिलकेव च॥
तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्वितम्।
दक्षिणोत्तरं आयामे लिंगन्तु पूर्वपश्चिमे॥
कुण्डानि खनितव्यानि अङ्गुल्या नैकविंशतिम्।
निधापयेद्धिरण्यञ्च रत्नानि विविधानि च॥
सिकता परिदेया च तत्राप्यग्निं समिन्धयेत्।
आज्यभागाहुतीर्हुत्वा न वाहुत्या च हं.मयेत्॥

अग्निं सोमञ्च सूर्यञ्च विष्णुञ्चैव प्रजापतिम् ।
विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टिकृतं तथा ॥
दधिमधुघृताक्तानां समिधाञ्चैव यज्ञिनाम् ।
होमयेच्च सहस्रञ्च तत्र चैव यथाक्रमम् ॥
चतुर्विंशति गायत्र्या मानस्तोकेति पञ्च तथा ।
विंशच्छाभिमन्त्रेश्च चत्वारि विष्णुदैवतैः ॥
कुष्माण्डैर्जुहुयाद्दश विकिरेद्वाथ षोडश ।
जुहुयाद्दशसहस्राणि जातवेदस ईदृशे ॥
पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः ।
स्रुवे शतसहस्रे तु अभिषेकन्तु कारयेत् ॥
दृष्टाभिषेकं यत्प्रोक्तं तदत्रापि शुभप्रदम् ॥
अथवा षोडशं कुम्भे सहिरण्यैः समङ्गलैः ।
सर्वौषधिसमायुक्तैः सर्वरत्नविभूषितैः ॥
अभिषेकं ततस्तस्मिन् प्रधाना दक्षिणा स्मृता ।
हयाश्वरथयानानि भूमिवस्त्रे युगानि च ॥
अजश्च गोशतं हेम ऋत्विजाश्चैव दक्षिणाम् ।
तथानेकादशैवाथ दश दद्याच्च धेनवः ॥
अशक्त्या वा प्रदद्यादेकां वित्तशाठ्यं विवर्जयेत् ।
एवं कृते तु यत्किञ्चिद् गृहपीडासमुद्भवम् ॥
भौममाकाशजं वापि असद्धा यदि जायते ।
तत्सर्वं लक्षहोमेन प्रशमं यात्यसंशयम् ॥
शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते ।
दृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसङ्क्षयः ॥
इति श्रीदत्त्यात्रायणीये लक्षहोमविधिः सम्पूर्णः ॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः ! ।
श्रूयतामादरेणाय सर्वकामफलप्रदः ॥
सानुष्ठानद्विजाः प्रोक्ता ऋत्विजो यागकर्मणि ।
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये ।
कार्यश्चैव विशेषेण ग्रहयागं विधिविद. । ॥
एकाङ्गविकलं विप्रो धनधान्यापहारकः ।
सर्वाङ्गविकलो यस्तु यजमानं स हिंसति ॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रविदूद्विज । ।
कार्यश्चैव विशेषेण ग्रहयज्ञश्च विद्द्विजैः ॥
ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः ।
अधीर्थं येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम् ॥
स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः । ।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः ॥
एवं कृते तु यत्किञ्चिद्ग्रहपीडासमुद्भवम् ।
तत्सर्वं नाशयेत्येव छन्नम. सौहृदं यथा ॥
अस्माच्छतगुणं प्रोक्तः कोटिहोमः स्वयम्भुवा ।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥
पूर्ववद्ग्रहदेवानामावाहनविसर्जने ।
होममन्त्रास्त एवोक्ता स्नानदानन्तथैव च ॥
मण्डपश्चैव वेद्याश्च विशेषश्च निबोधत ।
कोटिहोमे चतुर्हस्तं चतुरस्रायतं पुनः ॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् ।
द्व्यङ्गुलोच्छ्रितकार्या च प्रथमा मेखला बुधैः ॥
त्र्यङ्गुलोच्छ्रिता तद्वद् द्वितीया मेखला स्मृता ।

द्वारे मेखला या तु तृतीया चतुरङ्गुला ॥
द्व्यङ्गुलस्तत्र विस्तारः पूर्वयोरेव शस्यते।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नता मध्ये पार्श्वतश्चाङ्गुलोच्छ्रिता।
गजोष्ठसदृशी तद्वदायामाच्छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यान्मण्डपस्य चतुर्मुखे।
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनम्।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः।
एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः।
रात्रिसूक्तञ्च रौद्रञ्च पावमानन्तु मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पठमानोऽप्युदङ्मुखम्।
सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम्।
सौवर्णमथ वै राज्यमाग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं छन्दोगं पश्चिमे जपेत्।
पञ्चभिः सप्तभिर्वापि होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्युस्त एव द्विजसत्तमाः।
वसोर्धाराविधानन्तु लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत्।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
य पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्राणां दश चाष्टौ च धर्मवित्।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥
प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान्।
उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात् ॥
राष्ट्रं मनोवाञ्छितदृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम्।
निर्द्वन्द्वनीरोगमदस्तु तस्माद्यो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् तद्वयलक्षं शतहोमकं स्यात्।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजये धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाविदाहोद्भवपापयुक्तः।
राजा स मुक्तः शतलक्षहोमाग्निः शेषपापैर्विबुधत्वमेति ॥
तस्मात्तदा भूपतयो विदध्युर्वृष्टौ प्रजासौख्यबलस्य पुष्ट्यै।
आयुःप्रवृद्धौ विजयाय कीर्त्यै लक्षस्य होमे ग्रहयोगमेतम् ॥
इति श्रीबृहत्पाराशरीये कोटिहोमः सम्पूर्णः ॥

---

यो अन्यत्प्रवक्ष्यामि विधिम्पावनमुत्तमम्।
आम्नातप्रतातोऽस्य रघुपुत्राय धीमते ॥
अनपत्यस्य पुत्रार्थं कुर्याद्वैभाण्डिकं स्वयम्।
दश्वगीर्षसूक्तस्य विधानश्चरुपाककम् ॥

येयैः स्मृतं नृपैः पूर्वे रन्यैरपि द्विजोत्तमैः ।
उपासितन्तु सङ्क्त्या योऽचिरैर्वेदपारगैः ॥
आत्मविद्भिर्निराहारै र्मौड्भिः मन्त्रवत्तमैः ।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥
न पाठान्न धनात् स्नानात् नाज्ञत् प्रतिपादनात् ।
भक्तस्य कर्मणः पुत्र सर्वा भवन्ति सिद्धयः ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम् ॥
दम्पत्योरुपवासश्च स्नोक दश्यां सुरालये ।
चतुर्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन श्रपयेत् पुत्रकाम्यया ।
प्राप्याद्दैष्णव पुत्र चिरायुः सन्ततिक्षमम् ॥
द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेच्चरून् ।
यः करोति द्रुतायाति स विष्णोः परमं पदम् ॥
स्नात्वाभ्य विधिवत्पूर्वं चतुर्भिः षोडशभिस्तथा ।
समिधोऽश्वत्थश्चस्य स्नात्वाज्य जुहुयात् पुनः ॥
उपस्थानं ततः कुर्यात् ध्यात्वा च मधुसूदनम् ।
हविर्होमं पुनः कृत्वा जुहुयाच्च घृताहुतीः ॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
संप्राश्य च हविःशेषं लभेतात्र वसेद्गृहे ॥
ततः कृत्वा इदं कर्म कर्त्तव्यं द्विजतर्पणम् ।
रजः स्त्रीषु निवर्त्तेत यावद्गर्भं न विन्दति ॥
वसूता घृतपुत्रा वा यावत्कन्या प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा ॥

होमान्ते दक्षिणान्दद्यात् धेनुं वासस्तथा तिलान्।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा ॥
यः सिद्धमन्त्रः सततं द्विजेन्द्रः संपूज्य विष्णुं विधिवत्सुतीर्थे।
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात् ॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुष
सूक्तविधिः सम्पूर्णः ।

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम्।
आर्षच्छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम् ॥
आकृष्णेनेति मन्त्रोऽग्निर्देवस्य सविता मरुत्।
ऋषिर्हिरण्यरूपाख्य स्त्रिष्टुप्छन्दः प्रकीर्तितम् ॥
आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः।
गायत्रीच्छन्द उद्दिष्टं विनियोगो यथोदितम् ॥
अग्निर्मूर्द्धेति मन्त्रोऽत्र दैवता भौममुच्यते।
विरूपाक्षो मुनिर्धीमान् छन्दोगायत्र्य मिष्यते ॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्दः प्रकीर्तितम् ॥
शुक्रमिति चोत्यत्र शुक्र इत्यधिदैवतम्।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम् ॥
शन्नो देवीतिचेत्यत्र शनिर्दैवत मुच्यते।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते ॥
काण्डात्काण्डादिभिर्मन्त्रस्य राहुर्दैवत मुच्यते।
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम् ॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि।
मधुच्छन्दस आर्षञ्च गायत्र्य छन्द एव हि ॥

स्योना पृथिवीत्यत्र स्कान्दस्य देवता स्मृता ।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः ॥
आर्षन्तत्स्वस्य चापुत्र स्त्रिष्टुप्छन्दः प्रकीर्तितम् ।
यस्मिन्वृक्षेति सूक्तेत्यत्र यमोवै देवता परा ॥
ऋषिस्तु कुसुलो नाम छन्दोऽनुष्टुप् स्मरेद्बुधः ।
ब्रह्मजज्ञमित्यत्र च कामो दैवतकं महत् ॥
सुनिर्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते ।
आयाते मित्तिच ह्यस्या चित्रगुप्तस्य दैवतम् ॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो ह्यथो बुधैः ।
अग्निं दूतमितीत्यं स्यादग्निर्वै देवता स्मृता ॥
आर्षं मेधातिथेरत्र छन्दोगायत्र्यमेव हि ।
अस्सु सोम इत्यत्र सोमं वैदैवतं स्मरेत् ॥
मेधातिथिरिहार्षकोऽनुष्टुप्छन्दश्च उच्यते ।
भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवत चितिः ॥
ऋषिः शातातपः ख्यात्वा छन्दश्चानुष्टुकुच्यते ।
पुरुषसूक्तस्य देवत्य पुरुषेच हित बुधैः ॥
आर्षं नारायणस्येह छन्दस्यानुष्टुवित्यपि ।
इन्द्रोपिन्द्रो मरुत्वन्तो मरुत्वान्दैवत महत् ॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि ।
मरुत्वनित्यत्रबुधैः सुरेन्द्रो देवता मता ॥
अत्रापि काश्यपस्यार्षं गायत्र्यच्छन्दएव हि ।
उत्तानपर्णे मित्यत्र इन्द्रो दैवत मुच्यते ॥
आर्षं साङ्गस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि ।
प्रजापते इति ह्यत्र देवता च प्रजापतिः ॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः ।
श्राय गौरिति, ह्यत्र देवता पूजने मता ॥
सर्पराजमुनिर्ह्यत्र गायत्र्यं छन्द इष्यते ।
एष ब्रह्मा, ऋत्विजं इति ब्रह्मर्षिपोऽधिदैवतम् ॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते ।
श्रात्वन्न इन्द्रहद्रत् सुरेन्द्र शर्मणेश्वरः ॥
वामदेवोऽस्य श्रार्षं गायत्र्यच्छन्द इत्यपि ।
जातवेदस इत्यत्र जातवेदास्तु दैवतम् ॥
कश्यपस्यार्षमत्रापि छन्दोऽनुष्टुप् प्रकीर्तितम् ।
श्रानोनियुद्भिरित्यत्र वायु दैवतमुच्यते ॥
श्रार्षञ्चात्र वसिष्ठस्य अनुष्टुप्छन्द एव हि ।
नमः प्रकाशदैवत्यं मुनिप्रोक्तं प्रजापतिः ॥
गायत्र्यं छन्दसाश्वर विनियोगो यथोचितम् ।
ईषो ऊपेति चात्यत्र अश्विनौ दैवते स्मरेत् ॥
प्रस्करवस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम् ।
मरुतो यस्य हिप्यस्य मरुद्दैवत मुच्यते ॥
गौतमश्च मुनिविद्वन् १ छन्दसः प्रथम मुने ।
दैवत्य मार्षं सहच्छन्दसा यो मत्वाहिजाग्राकु रुते विधानम् ।
येदोक्तमर्थं स्वतिसा सर्वं सम्यक्फलं कर्त्तुमिराप्मुव ॥
यो लक्षहोमं ऋचय कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम् ।
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् श्रारोग्यता स्यात् सुजनस्य वृद्धिः ॥
भवन्ति पुत्राः शुभसन्ततिः क्षमाधिरायुषी राजहिता धरित्र्याम्।
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतुल्याः॥
इति श्रीवृहत्पाराशरीये शान्तिविधर्गोम नवमोऽध्याय ।

# दशमोऽध्यायः।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया।
पराशरोदितं विप्रा! वक्ष्यमाणं निबोधत॥
ईश्वरः भूमा परो देवपूज्योऽसौ नरदेवकः।
स विधाता च सर्वस्य रक्षिता शासितापि च॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः।
शीतांशुस्तीव्रभासश्च ब्रह्मादयो हि नो नृपः॥
नृपो वेधा नृपः शम्भुर्नृपोऽर्को विष्टरश्रवाः।
दाता हर्त्ता नृपः कर्त्ता तथा कर्मानुसारतः॥
नाधृक्ष्येद्यदि राजानं दण्डं नाप्याचरिष्यतः।
नाभास्या क्षमेष्यतिच नाभविष्यज्जगत्स्थितिः॥
नार्चयिष्यन् पुरोडाशान्मनुष्यपितृदेवताः।
नाभविष्यत् स्वकाकानां भागधेय हुतं हविः॥
विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत्।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन्॥
स्वधर्मस्थान् नृपो लोकाननन्यान् पुत्रानिवौरसान्।
शास्त्य धर्मविदो दण्डमधर्मकारिणश्च तान्॥
दण्डधृतो नरान् कुर्याद्धर्मज्ञानार्थसाधकान्।
समर्थानश्वपत्यादौ शूरान् स्वामिहितोद्यतान्॥
शुचीन् प्राज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकरान्वितान्।
लेपकानपि कायस्थान् लेखकांस्तु हितैषिणः॥
अमात्यान्मन्त्रिणो दूतान्ययोदितपुरोहितान्।
प्राड्विवाकं समस्तान्वा हिताय रचकानपि॥

शूरानथ शुचीन् प्रज्ञान् परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सतकृत्य वेदिनोऽपरे ॥
मदायत्तं कुमाराणामन्तःपूरुपलक्षणम्।
वृद्धानशुचिनीर्विप्रां स्ववुचीननघान्न भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम् ॥
उद्वाहमुदितं स्त्रीणां यौवने वन्धुकारणात्।
पुरस्कृत्य च विद्वान मालरक्षा च यत्नतः॥
प्रातः सन्ध्यार्चनादूर्द्ध्वं शुडं पुंसवनं स्तृतम्।
यथोक्तकार्य्ये शाद्ये च नित्य कुर्य्यात् परीक्षणम् ॥
कोशभाण्डरथादीना हेतीनां वर्मणामपि।
कुर्य्याश्च दर्शन नित्य मतन्द्रितो महीपतिः॥
अमात्यमन्त्रयोक्तृणां सम्मन्त्रं नित्यशोऽपि च।
वेदार्थश्च सदा होमशान्तिश्च वृद्धसेवनम् ॥
यन्त्रदानं तयोत्पातं समये शान्तयोऽपि च।
वर्जन विषयासक्तो भूमिदानस्य शासनम् ॥
अधिवर्जितदेशे तु नीतिज्ञो मन्त्रकृद्भवेत्।
नित्यमुत्साहयुक्त स्याद् विजिगीषु सदायुधः ॥
सदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाग्नियहिने युक्तः पूज्यो नाकेऽप्यसौ नृपः॥
सदा साधुषु सन्मानं विपरीतेषु घातनम्।
दण्ड दण्ड्येषु कुर्वाणो राजेष्टिफलमश्नुते॥
वृद्धान् साधून् द्विजान् मौलान् यो न सम्मानयेन्नृपः।
पिण्ड कुर्व्वीत नामीषा भूस्तत् चिप्र क्षयं व्रजेत् ॥
यस्तु सन्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽपि जायते ॥
पीड्यमाना प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्येनुत्पद्यतोयैश्च संपन्नं परमण्डलम् ॥
हीनवाहनपुष्टांस्तु मत्वा तत्प्रविशेन्नृपः।
मासे सहसि यात्रार्थी कृतपुण्यश्च घोषवान् ॥
विधिवद्व्यानकं कुर्य्यात् सहाद्रे रचयेद्बलम्।
यत्राचलमरीरक्षा हवरक्षातु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्धनं स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्चतुर्धरान्निशि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं सश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हन्यान्न भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न क्वचिन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानाना व्यलीकहृतशङ्कितम् ॥
उत्थापयेत् स्वसेनाया स्थायताचित्तभेदिन.।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गरदानादि वह्निपातानेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यन्त्रदुरूपान् नक्तं सर्वं निशामयेत् ॥

अन्तर्भीरून् बहि: शूरान् साग्निकान् ब्राह्मणोत्तमान्।
धर्मज्ञान् कुलसम्भूत न् विदध्याद्दात्मसन्निधौ ॥
प्रविशेत्परदेशे तु प्रजां सौख्य संविशेत् ।
उत्माथ्यं मार्गनेरे दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्यानि दाहयेत्सर्वं सयवानि धनानि च ।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखा तथा ॥
अपसृत्यमुपादाय भूमिसाधारणां पुन: ।
गमयेद्वार्षिकान् मासानसौ च वसुधाधिप: ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम् ।
न प्रभेदेन दानेन त्रिभिरेव वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गती. ।
तद्वशं यथमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दर्भसूच्योऽपि विद्युद्‌घटप्रोपपातनम् ।
न तापित युद्धे च युद्धसिद्धौ धरसिंहवत् ॥
सस्यस्यास्त्यधिके देशे युद्धमिच्छेत् स्वधर्मवित् ।
तत: प्रविश्य तद्दूर भूमियुद्ध समारभेत् ॥
किंचित् सुप्तेषु लोकेषु क्षपायां यद्दमुत्सृजेत् ।
संभ्रीरयामतोवापि पीडयेत्परसैन्यकम् ॥

हीन परबलं मत्वा निरुत्साहमनादरम् ।
समस्तवलसंयुक्तं स्वयमुत्थाप्य योधयेत् ॥
न हन्यान् मुक्तकेशन्तु नाशयेन्न निरायुधम् ।
पराङ्मुखश्च प्रहतं न तवास्मीति वादिनम् ॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धकृत् ।
हन्यान्नेन्नरकं याति भूणहत्यासमेनसा ॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते ।
तस्य दानीष्टितुल्यानि भूत्यर्थमेकचेतसः ॥
शिरोहतस्य ये वक्रे विशन्ति रक्तविन्दवः ।
सोमपानेन तत्तुल्या इति वासिष्ठजोऽब्रवीत् ॥
युद्धन्ते भूभृतो येच भूम्यर्थ मेकचेतसः ।
इष्टैस्तैर्वङ्गभिर्योगैरेव यान्ति त्रिविष्टपम् ॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम् ।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा ॥
तदा तु वशता याति स देशो न्यायतोऽर्जित ।
तद्देशव्यवहारेण यथावत्परिपालयेत् ॥
रणार्जितेन वित्तेन राज्ञौ कुर्य्यान्नमस्थान् द्विजान् ।
अर्चयेद्विविधविद्वान् सतान् सन्मानयेदपि ॥
मातुल, श्वशुरो वन्धु रन्यो वापिच यो जित ।
अदण्ड्या: कोऽपि नो राजा राजनीतिविदो विदु ॥
सुसन्धायमग्रपाद शूर महानुरागदम् ।
सोत्साहं विजिगीषुश्च भूभृन् क्षिप्रं निवेदयेत् ॥
मत्वाचार्यवत. सर्वान् नियुक्तार्थनियुग्भवेत् ।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोषवत् ।
आदाय रक्षेद्धीमान ततस्तत्र च तत्र क्षिपेत् ॥
वित्तं वार्द्धुषिकाणान्तु कदर्यस्यापि यद्भवेत् ।
पाषण्डिगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणका गणिकादय ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
समाचिन्त्यात्मगोमारान यस्य दद्यत्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् य. पीडयेत् प्रजा. ॥
सन्धिकं स कर्त्तुं फलक मासं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुनृपो नान्ये. कदाचिदभिभूयते ।
तदैवं हृदि सन्ध्यायन् निरुत्साहो नृपो भवेत् ॥
दैवपूरुषसंयोगे सर्वाः सिध्यन्ति सिद्धय ॥
नैकेन चक्रेण रथ. प्रयाति नचैकपक्षोऽङ्ग। चयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धि नरकारतो वा ।।
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणाम्।
पुंस्कारयुक्तस्य नरस्य केचिदप्यल्प दृष्टा पुरुषार्थसिद्धि ।
अत्युद्यमी क्रियतएवच य श्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

सुस्नानि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
उर्वीपतित्वञ्च शृङ्गारता च सर्वं हि मञ्जु च्यमिति दैवात्॥
केषां हि पुंसा महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः।
एषां प्रभत्व बहुजीविताच एको हि दैवो वनवानतोऽत्र ॥
पुंस्त्रीप्रयोगादथ युक्तयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
स्त्रीणां तु तत् विप्र । नचापि पुंसा सर्वाणि चैषां मनुजेश्वरत्वम्
कासान्तु गर्भस्य न सम्भवोऽस्ति कासान्तु शुक्र नतु वीर्य्यहीनम्।
अथच गर्भोऽपि जहाति गर्भ काचिच्च गर्भं न बिभर्ति दैवात॥
धाता विधाता निजकर्मयोगाद् विधेश्चकीष्ट त्वनुभावभाव्यम् ।
देवासुराणां नच दैत्यकानां स ह्येव कर्त्ता तु मनुद्भवानाम्॥
दैवात्पयोनापि सहस्रमर्त्त्यां देवाच्छिमायो चयरोगता च ।
दैवात्पयोधौ लवणोदकत्व दैवाद्भवेच्छिततरा च वृष्टिः ॥
यद्यप्यमुष्य न परोऽस्ति दैवात् कुर्यात्तथापीह नरो शृकारम्।
उद्दीपयेत्कर्मकरो शृकारादुद्दीपित श्रीरिवबैं तनोति ।
दैवेन केचिच्च हठेन केचित् केचिन् शृकारैण नरस्य चार्थाः ।
सिध्यन्ति यत्नेन विधीयमाना स्रोषा प्रधान नरकारमाङ्गः॥
स्वामिप्रधानं तयदुर्गकोशान् दण्डञ्च मित्राणिच नीतियज्ञा ।
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गपूर्वो नृपतिर्धराभुक्॥
दुष्टेसस्हृत्तानगेषु दण्ड राज्ञा विधेय निपुणार्थसिद्धे ।
दण्डस्य मत्वाऽर्जितवित्तसत्त्वात् हीनार्थ पुसार्थ दमन्ति हीनम् ।
अन्यायतो ये जनन जनेश्वरा संपीड्य वित्तानि नयन्ति लोभात्।
तत्क्रोधवह्नि परिदग्धकाया चीणायुषस्ते तु भवन्ति भूपाः ।
दण्डो महान्मध्यमनन्यमस्तु मानन्तु तस्य लसरेणुकादि ॥
साशीति साहस्राणपाममश्नन् स्यादर्धादिकै चैव तदर्धको वा।

सर्वार्थपादैस्तु हरस्य दण्डः पात्यो नृपेणेति वदन्ति सन्तः ॥
पाण्यादिपादच्छेदनमारणञ्च निर्वासनं राष्ट्रतश्च सद्य ।
ज्ञात्वापराधं मनुजस्य यत्तु देशञ्च कालञ्च वयोवपुश्च ॥
दण्डेषु दण्डं विदधाति भूभृत्तस्य स बध्नाति पुरन्दरस्य ।
यः शास्त्रदृष्टेन यदा नरेश्वरो दण्डं विदध्याद्विधिवत्करांश्च ॥
स चैवकीर्तीर्वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान् ।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्चरतांश्च लोकान्
स्थानीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणैः प्रशस्यम् ।
अन्यच्च वह्निर्जलवित्तबाधशीतांशुरूपाणि ह विभ्रतीह ॥
सर्वे च भूपस्त्विह रूपकाश्च तत्तथ्यमान शृणुत द्विजेन्द्राः ।।
यदा र्जिगीषुर्धृतशस्त्रपाणि स्त्रियं समालभ्य स विद्धसैन्य ॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदा सहर्यश्व इवावभाति ।
आकारणात्कारणतोऽपि एष प्रजा हतेय स सद्धकीर्ति ॥
यदा तदैनं नृपतीति विद्वांस्तनूनपात्त प्रवदन्ति भूपम् ॥
धर्मासनस्थश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारकस्स्यात् ॥
धर्म्येषु दानं त्वथ कृत्सु दण्डं यदावनीशः स च धर्मराजः ।
धनप्रदानेन करोति हृष्टां भूभृत्तदा सान्द्रयशोगवश्याम् ॥
समस्तशीतांशुगुणप्रयोक्ता यदा यदामेष शुभाय शास्येत् ।
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः ॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त स्वशस्त्रवध्यः ।
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोके ॥
दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्यः परम नृपस्य ।
यस्तस्य तेजोऽध्ययमन्यमान्यः सद्य स पञ्चत्व मुपैति पापात् ॥

योऽङ्काय सर्वं विदधाति पश्येत्
शृणोति जानानि चकास्ति शास्ति।
कस्यापि चाज्ञा न विशति राज्ञः
समस्तदैवाशभवांद्दि यस्मात्॥
य. स्वधर्मे स्थितो राजा प्रजा धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोक मवाप्नुयात्॥
इति श्रीहृत्यारायणीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्दिना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यशौचाग्निकर्मकृत्॥
वन्यैर्मुन्यन्नमेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकै स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीरवासा वै श्मश्रुलोमजटाधरः।
पितृंश्च तर्पयेन्नित्यं दैवाश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैत्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाध्यात्मचिन्तकः॥
सम्यस्तशान्तको नित्य दानशील सदा द्विज।
किञ्चिद्देह समाश्रित्य संहृत्या वर्तयेत्सदा॥
एकाह्निकन्तु कुर्वीत मासैकार्थसञ्चयम्।
षाण्मासिकवार्षिकञ्च यज्ञार्थं च वने वसेत।
त्यक्त्वा तदाश्विने मासि अन्य स्थान समाचरेत॥
यथावद्ग्निहोत्रं तु समिधाग्नौ च पालयेत्।

कृच्छ्चान्द्रपराकाद्यैः पञ्चमासोपवासकैः॥
त्रिरात्रैर्वैकरात्रैश्च श्राम्यमस्य च्चशेद्वपुः।
तिष्ठन्नार्त्रंतिकस्तत्र स्वपेदधस्तथा निशि॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत्।
योगाभ्यासरतोऽनित्यं स्थानासनविशारदवान्॥
वसन्तग्रीष्मवर्षासु जलाग्न्याकाशमाश्रयेत्॥
दन्तोलूखलिको वापि कालपक्वभुगेव च।
स्याऽश्मकुट्टकोविप्र फलस्नेहैश्च कर्मकृत्॥
शत्रौ मित्रे समः स्याच्च तथैव सुखदुःखयोः।
समदृष्टिश्च सर्वेषु न विशेद्वनगह्वरम्॥
म्लेच्छव्याप्तानि सर्वाणि वनानि हि कलौ युगे।
न भूय श्रासितारस्तु ग्रामोपान्ते वसेदतः॥
ग्रामाच्च नगराद्वापि तथारण्यवनानि च।
चैत्यंशरच्चितान्येव सर्वेषां फलदानि हि॥
भूपतेः प्रथमं तत्स्यात् क्षत्रं शसेद्वहिजाग्रतः।
यागं वाऽरण्यवासं वा कुर्यात्तु तदनुज्ञया॥
सुत्रामानलवायूनां यमसेन्द्रविवस्वताम्।
यदा वित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम्॥
पारत्रिकं तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा।
नृपाज्ञया द्विजातीनां तत्सर्वं सिद्ध्यति ध्रुवम्॥
नृपतेः प्रथमं न स्यात् स वै द्विजः। मखादिकम्।
रक्षार्थं कथयित्वा तु यथाकार्यं समापयेत्॥
धेनुपूर्वं वशिष्ठस्य ह्यसौ दुर्वाससोऽपि च।
वनवासाश्रमस्थस्य ह्यग्निकार्याय ताश्रयेत्।

फलस्नेहाय दानस्य कालवैगुण्यतोद्विजः॥
तथा गोदुग्धसर्पिष्य अग्निकार्यं समापयेत्।
सर्वकालेषु सर्वेषु तथा चैवाश्रमेषु च॥
गोदुग्धादि पवित्रं स्यात् सर्वकार्येषु सत्तमाः!॥
सर्वकार्येषु सर्वेषु भिक्षां कुर्याद्दिनाश्रमी।
तथा सर्वं प्रकुर्वन्ति पितृदेवार्चनादिकम्॥
अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान्।
आश्रमः संचयं गच्छेद्दनिलां प्रागुदीचिकाम्॥

विप्रोविधाय वनवासविधेयधर्मान्
सर्वानिमानुक्तविधिक्रमेण।
सशुद्ध पापानि वपु र्विशोध्य
ब्रह्माधिगच्छेत् परमं द्विजेन्द्रः॥

आश्रमत्रयधर्मात्प्राक् चरित्वा ते द्विजातयः।
द्वयोश्च वा ततः पश्चाच्चतुर्थाश्रममाचरेत्॥
द्विजाग्रजो यदा पश्येद्वलि पलितं मात्मनः।
उपरति तथाचाणां क्षीणकामः स्वै द्विजः॥
समीक्ष्य पुत्रपौत्रं वा दृष्ट्वा वा दुहितुः सुतम्।
अधीत्य विधिवद्वेदान् कृत्वा यागविधानताम्॥
निश्चयं मनसा कृत्वा चतुर्थाश्रममावसेत्।
आ,ज्ञापत्य विधायेष्टिं वनाद्वासमनोऽपिवा॥
समस्तदक्षिणायुक्तां सर्ववेदास्तथाप्रवान्।
अग्निनात्मनि चारोप्य दण्डान्विधिवदाचरेत्॥
किञ्चिद्दं समास्थाय तद्धर्मेण च वर्त्तयेत्।
वाङ्मनःकायदण्डाश्च तथा सत्त्वादयो गुणाः॥

सुसुख्यो नियतो यस्य स त्रिदण्डीति कथ्यते ।
कमण्डलुस्तथाऽलाब भिक्षापात्र मथापरम् ॥
काषायवासःकौपीनकार्यार्थं वस्त्रमेव च ।
शिखायज्ञोपवीतञ्च दण्डानां त्रितयं तथा ॥
द्विकालविधिवत् स्नानं भिक्षया चापि भोजनम् ।
शुद्धैकवृत्तिर्विप्रेषु सत्कर्म निरतेषु च ॥
भिक्षार्थं यो यतिः मौक्तो वृत्तवर्जन्तथैव च ।
असंभाष्यं स्वशून्येच तथाच शिल्पकारुभिः ॥
अवक्तव्यं तथा स्त्रीभिरेतत्कृत्यं यतेः स्मृतम् ।
सर्वदा दम्भसरोधो नित्यमेकान्त[illegible]तः ॥
सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम् ।
मृद्वेणुदार्वलाव्वश्ममय पात्रं यतेः स्मृतम् ॥
शुचिरम्भस्त्वभीषाञ्च गोबालश्चाघमर्षणम् ।
न दण्डेनैव,दण्डेन विना वातेन वा तथा ॥
मोक्षावाप्ति र्भवेत्तु सा किन्तु साध्यात्मचिन्तनम् ।
समत्वं सुखदुःखेषु तथा वै द्वेषरागयोः ॥
आत्मसमानधर्मत्वं मजस्त्र चात्मचिन्तनम् ।
यतिभिस्त्रिभिरेकत्व द्वाभ्यां पञ्चभिरेव च ॥
न स्थातव्यं कदाचित्स्यान्निस्स्वल्तो नाशमाप्नुयुः ।
वक्तव्य यत्र भिक्षाणां वार्तास्तत्र विचित्रकाः ॥
स्नेहपैशुन्य मात्सर्यभिक्षाणां नृपतेरपि ।
तस्मादेकान्तशीलेन भवितव्यं सदा द्विज ! ॥
आत्मास्यासरतो नित्यं ब्रह्मावाप्ति मभीप्सताम् ।
त्रिदण्डग्रहणादेव प्रेत्य नैव जायते ॥

अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्यतः।
यतेन्द्रियोऽपि दण्डार्द्धौ युवा तस्य तथा निरुक्॥
युवा निरुक्तयाभिक्षुर्वामदृक्षमदर्पक।
भिक्षुर्गृहे वसेत्तैत कामार्थान्योऽभिगच्छति॥
तत्स्थानेन हथा चैव मद तेनैव तापयेत्।
निवसेदेकरात्रञ्च वर्जयेत तु वेश्मनि॥
स तारयति हृद्यान्वै विंशतिं पितृमातृत्।
भिक्षुर्यस्यान्नन्तु ब्रह्म योगाभ्यासरतो भवेत्॥
परिणामश्च योगेन चतुष्कल्पो गृही स तु।
निर्ममो निरहङ्कार. सर्वं सह प्रयच्छति।
ब्रह्मण्यात्मनि गोमायो मृते दृच्छासु दाम्भिदृक्।
चिह्नानि धात्वा कथितानि यस्यवक्त्रे सयस्याभिहितेव भिक्षा॥
योध्यानवान् वा सतत जिताक्ष स ब्रह्मकात्म्योगमनं करोति॥
वनस्य भिक्षुधर्मान् वै यानब्रवीत्पराशर।
तथावदभिधायेतान वक्ष्याम्याश्रमभेदकान्॥
इति श्रीस्त्वपाराशरीये धर्मशास्त्रे वानप्रस्थयति-
धर्मोनाम दशमोऽध्याय.।

---

## एकादशोऽध्यायः।

अथात सम्प्रवक्ष्यामि भेदमाश्रमसम्भवम्।
ब्रह्मचर्यादिकानान्तु तथा तथ्यं निबोधत॥
चतुर्णामाश्रमाणा तु भेदो दृष्टो मनीषिभि।
प्रत्येकशो वदाम्येतत् शृणुध्वं द्विजसत्तमाः॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यती ।
एतद्भेदं प्रवक्ष्यामि शृणुध्वं पापनाशनम् ॥
चतुर्धा ब्रह्मचारी च स्नातो यत्र यतस्तथा ।
चत्वारस्ते पुनर्भेदैस्ते लक्षणानि पृथक् पृथक् ॥
अचारलवणाशित्वा गृयत्वाच स प्रत्यहम् ।
वर्तते चपया नित्य गायत्र्यं तत्प्रकीर्तितम् ॥
चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुः श्रुती ।
भिक्षया ब्रह्मचर्येण तेष्वध्याप्य तदुच्यते ॥
ऋतुकालाभिगामी सन् परस्त्रीपर्ववर्जक ।
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते ॥
गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ ।
यो वसेदात्मसंज्ञान ब्रह्मचारी स नैष्ठिकः ॥
गृहस्थस्य चतुर्भेदो मतः शालीनतीवकौ ।
यायावरास्तथा चान्ये घोरसन्यासिकास्तथा ॥
कृषिगोरक्षवाणिज्यैः सर्वान् कुर्वन् क्रियां द्विजः ।
विहितोत्थात्मविद्यश्च वार्तावृत्तिः स उच्यते ॥
इदात्यध्येति यजते याजयेत् चैव पाठयेत् ।
कुर्यात्कर्म प्रतिग्राही शालीनोऽध्यानकृद्द्विज. ॥
यक्ष. सन् कारयेदन्या क्रिया कुर्यात्प्रतिग्रहे ।
पाठको नियतात्मा च यायावरः स उच्यते ॥
तिष्ठेद् यश्च शीलोञ्छाभ्यां सुवृत्ताद्भिश्च वर्तते ।
आत्मविन्न क्रिया कुर्यात् घोरसन्यासिक स तु ॥
वानप्रस्थचतुर्भेदो वैखानस उदुम्बर ।
वालखिल्यो वनेवासी तस्य लक्षणमथोच्यते ॥

फलैर्मूलैरकृष्याद्यैरग्निकल्पेन वै वसन्।
कुर्यात्पञ्च महायज्ञानात्मविद्वैखानसः स तु॥
इमानि तत्फलः कृष्णाभ्रे यतः उदम्बरे।
योवा वसेद्यती यौनी पञ्चयज्ञाग्निकर्मकृत्॥
वनस्थो वालखिल्यो यो वसेत् वल्कलचीवरम्।
अग्निकार्यकृदाश्च दुर्जातसेवितं त्यजेत्॥
चतुरोऽन्यानमूनग्निकार्यं कुर्वन्वने वसेत्।
फलस्नेहैः फलैर्वन्यै र्वैश्चभि श्रुतिचोदितम्॥
उद्धृत्य परिभूताद्वि तथा वै वित्तवृत्तिक,।
फलैर्वन्यैर्वनान्तैश्च फेनप पञ्चयज्ञकृत्॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि।
न दुष्याव, कुटीस्थोवा यद्भैक्ष्य हविर्भुक् द्विज,॥
ज्ञेयो बहूदको नाम यश्च पवित्रपादुक।
शिखासनोपवीतानि धातुकाषायवासकृत्॥
चतुर्भेदपरिव्राट् स्यात् कुटीचरबहूदकौ।
हंसा, परमहंसाश्च वक्ष्यन्ते तु पृथक् पृथक्॥
साधुवृत्ति र्द्विजो यस्तु भिक्षाभुगात्मचिन्तकः।
बहूदक, स्वय ज्ञेयः परिव्राट् स त्रिदण्डधृक्॥
एके दण्डधरा हंसा शिखोपवीतधारिणः।
वार्याधारकराः शान्ता भूतानामभयप्रदाः॥
वसेदेकनिशां ग्रामे नगरे पञ्च सर्वशः।
सर्पयन्तो व्रतैर्देहमात्मध्याने सदा रताः॥
एकदण्डधरा मुण्डा कन्थाकौपिनवाससः।
अत्यन्तालिङ्गिनोऽव्यक्ताः सर्वदैव च मौनिनः॥

शिखादिरहिता शान्ताः उन्मत्तरवधारिणः ।
नग्नः शूरामरैः केषु वासिनो ब्रह्मचिन्तकाः ॥
ये ते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवे ।
उक्ता सद्व्रतभेदैश्च रात्मन प्रार्थनापराः ॥
यो ब्रह्मचर्यं व्रतचारिभेदो
भेदो गृहस्थस्य तथैव यततः ।
हिरण्यवासी द्विजकर्मभेदो
ह्युक्तो मयासीद्द्विजभिक्षुभेद ॥

इति बृहत्पाराशरीये वानप्रस्थयत्याश्रमभेदो नाम एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ।

मुमुक्षवो विरज्यन्तो देहाद्देहादितो यथा ।
शरीरत्रासया प्राज्ञः परब्रह्मनय गता ॥
स्वेदाद्यग्न्यम्बुधात्वीभि सारव्यामाशुनाशि तत् ।
तन्मुख्ये गुणसयुक्ते सत्पञ्चालनं व्रजेत् ॥
शुक्लयोषितसंयोगात् स्त्रीकोष्ठपाकसम्भवम् ।
दुःखेन दशभिर्मासैर्थापितम्भूरि दोहदैः ॥
जनन्यादौ गृहाभावे गर्भस्यापि दुःखित ।
पतत आयमानस्य योनियन्त्रनिपीडनात् ।
जातस्य बालरोगाद्यैः योगिनीग्रहदोषतः ।
देहिनः सर्वदा दुःखं पूजाजन्मादिकैर्ग्रहैः ॥
एवं बाल्ये महद्दुःखं कामार्थं यौवनेऽपि च ।

स्त्रिया विना तु स्याद्धर्माद्दरिद्रैश्वर्ययोरपि ॥
क्षुत्तृड्भ्यां प्रथमे विग्र दक्षणाद्यै र्द्वितीयके।
हृद्रत्ते या तयोर्द्द मलस्माद्द प्तमयं वपुः ॥
मासेन लोपितं चार्त्तं स्नायुभिः कुल्यसञ्चयम्।
मेदोमेदनसम्पूर्णं कफपित्तस्य साश्रयम् ॥
अमेध्यपूर्णभस्त्राव दभ्रे वै सर्वदा शुचि।
तस्यायाः स्नानगन्धाद्यैर्निर्गन्धौ क्रियते यदि ॥
दुर्गन्धः सर्वरन्ध्रेषु स्वप्राणोद्वेगकारणम्।
सततञ्च स्वावमेध्यञ्च देहे शोच्यं शुभम् ॥
यद्दग्धं भवेन्मृतस्य दग्धभस्मत्वमाप्नुयात्।
मृतस्य दग्धे किञ्चित्तु शाकोपरतस्य च।
क इहाभ्युद्यते विद्वान् कथेह म्रियते पुनः।
यन्त्रोपममिदन्धीमन् । वायुत्यक्तं मृतम्भवेत् ॥
पृथगात्मा पृथक्स्वातं पृथक् खानि दृशानि च।
पृथक्भूतानि भूतानि पृथक्तेषां गुणोत्तरं ॥
पृथक् पाप दिवायुश्च तद्गतिश्च पृथक् पृथक्।
पृथक् पृथगिति ह्येतत् पृथग्भिः किमिहोच्यते ॥
आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः।
अत्ययाद्द यदवाप्नोति याति वीर्यं पुनर्वपु ॥
शृणुयात् पादस्पर्शं जिघ्रेत् स्वादेद्वियां स्मरेत्।
स्वपेच्च जागृयाद्गच्छेद्रुयाद्यायेद्यतेत वा ॥
स्त्रीयाद्यद्यथाप्यद्य जायेत स नयेदपि।
सोऽस्तिकश्चेत्परो देहाद्योदेहीति निगद्यते ॥
नैकश्च स्याद्देहे वै ह्यभिन्ना कथम्भवेत्।

एकहृक् दृष्ट्रूपस्य पुनरन्येन पश्यतः।
यद्रागं यद्द्वेषं वस्तु तद्वैतत्सृशास्यथ॥
यच्चास्पृश्य च पश्यामि प्रतीतिर्यस्य जायते।
दर्शनाभ्यां तु सन्त यद्देयादेकवम्न.॥
अस्ति ह्यात्मा परो देहात् यो देहीति च कथ्यते।
गृहीच गृहमध्यस्थो लग्नादिच समाचरेत्॥
देहे चतादिसरीदृान् त्वतो देहस्य कश्चन।
स एव पूज्यते कुर्वन् उद्देशो तस्य ताविति।
वार्यते कर्मणा चापि बाध्यते कर्मणापि च॥
उभयस्यापि चैवात्र प्रत्यक्षं दृश्यते द्विजा.!।
मायाविसञ्च मूकत्वमतिक्रान्तागतास्तुमान्॥
अन्न बाधान्यहर्तृणा पिशुने पूतिनासिना।
भरतो वणोकैर्यतैर्देहस्य वर्णयेत्तथा॥
कुर्वन्नानाविध कर्म तथात्मा कर्मजस्तनूः।
जरायुजाण्डजादीनि वपूंसि यो यद्देश्निजै.॥
कर्मभिर्वर्णभेदैश्च चित्रदैर्गत्यरुग्यत.।
वन्निरान्धकिनः क्लीबा जायन्ते पुरुषाधमा॥
निरत. स पुनर्भूत्वा विद्वद्विप्रकुलेषु च।
महाकुर्वाश्च जायन्ते लक्षणाद्धितयान्वित.॥
धनवन्तः प्रजायन्ते वेदवन्तो यशस्विन.।
रूपसम्भाग्यसम्पृक्ताः सर्वेषां नयनप्रियाः॥
ब्रह्माद्याप्मरतां शान्ता. षट्कर्मनिरतास्तथा।
पञ्चयज्ञरतो नित्यं अग्निष्टोमादिषु स्थिता.॥
द्विजोपासिकरा नित्यं हृवर्णाचार्यादि पूजकाः।

चतुराश्रमधर्माणां कथिताः समदर्शिन ॥
गुणैः सर्वैः समायुक्तास्तेऽलक्षिनो द्विजक्रिया ।
एवम्भूताश्च ये क्षिप्रास्तेषां विष्णुः सदान्तिके ॥
विष्णुश्च सर्वदेवत्वं तस्माद्विप्र सदोभवेत् ।
देवत्वार्थोज्ञता नित्यं गुरूपासिरतस्तथा ॥
ब्रह्मैवाचामता सम्यक् ब्रह्मसान्निध्यमृच्छति ।
तदुपास्य सदा ब्रह्म यावत्साधनकाश्च यत् ॥
वक्ष्यपापान्विदित्वा च, संसरेन्द्रेह मानवे ।
*वदन्ति ब्रह्मदेवेशे ब्रह्मन्यासमनेकशः ॥*
ब्रह्मापि द्विविधं धाम न.परं परमेव च ।
समाव नपरं ब्रह्म शब्दब्रह्मेति कीर्तितम् ॥
प्रणवाख्यन्त्रिरूपन्तत् मागेव हि विशेषतः ।
प्राणायामे तदभ्यस्य पूरकाद्यैश्च वायुभि ॥
पूरको कुम्भको वायू रेचकस्तु द्वितीयक ।
येन व्यावर्तते वायुर्नासाग्राग्रि:सरन्धिहि ॥
श्वासयोगेन तं प्राज्ञः पूरकं तद्विदोऽनिलम् ।
श्वासयोगं ददन्त्येन कवयः स्तन्तु पावनम् ॥
विदुस्तं रेचकं तज्ज्ञाः रेच्यश्च शनकैः शनैः ॥
न वेगाद्रेचयेद्वायुः सर्वथा विघ्नभाक् भवेत् ।
मोचयेन्मन्दमन्दन्तु वह्निः स्यात् कुम्भितो यथा ॥
नासाग्रस्थितपार्णान्तु समिखञ्चालनं चमम् ।
अनिलं रेचयेद्योगी न मन्दं वाति वेगवान् ॥
न घ्रायतेऽनिलो यस्य नि.सरन्नासिकाग्रतः ॥
यस्मात्ते कुम्भितो जन्म प्राणयोगी स उच्यते ।

दीर्घायुष्यं परं स्थानं समस्ता योगरूढय ॥
देहे तस्यावतिष्ठन्ति प्राणायामवशीकृता ।
यत्र तिष्ठति जीवस्य निरुद्धोऽस्यस उच्यते ।
स किन्न धार्यते प्राणो ब्रह्मा तिष्ठति यत्र तु ॥
प्राण एव हि चात्मा च प्राणो देहस्य वाहक ।
शरीराग्नि स्तो प्राणे नाम्ना विश्ववाहक ॥
देहं त्यक्त्वा यदा जीवो बहिराकाशमास्थित: ।
तदा निर्विषयो वायुर्भवेदत्र न संशय ॥
तदा ससर्ज देहेषु नासाग्रमास्थित शिव ।
प्रत्यक्ष सर्वभूताना तिष्ठते नच लक्ष्यते ॥
तदा न श्वसते वायुस्तदा निष्फल मुच्यते ।
नाभिसस्थन्तु विज्ञाय जन्मबाधाद्विमुच्यते ॥
देहस्य. सर्वसत्वाना स जीवति शृणोति च ।
धर्माधर्मौ ग्रवष्टभ्यौ देहे देहे व्यवस्थितौ ॥
सुदृशकञ्जसस्थस्तु अथ ऊर्द्ध प्रधावति ।
धर्माधर्मैर्महापाशै र्गृहीत स प्रवर्त्तते ॥
ऊर्द्ध मुच्छ्वसते यावत् प्राणो द्रव्यसमीरणात् ।
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थित ॥
अवस्थं निष्फलं ब्रह्म यावन्न श्वसते द्विज ।
श्वसनेन समायोगादाकाशात्पुनरागत ॥
नासारन्ध्रसमालीन स्तदा निष्फल उच्यते ।
स जीव इति विख्यात स विष्णु स महेश्वर: ॥
ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु ।
विष्णुब्रह्मेश्वरास्तेषु स्थानेषु स्थापरा द्विजै. ।

नीलपङ्कजविख्यात आनीय नाभिमध्यतः॥
महात्मानं चतुर्बाहुं केयूरन्तु हरिं स्मरेत्।
हृत्पद्मे कुम्भके ध्यायेद्‌ब्रह्माणं पद्मआसनम्॥
राजेन्द्रीवरवर्णाभं चतुर्वक्त्रं पितामहम्।
रेचके शङ्करं ध्यायेत् ललाटस्थं त्रिशूलिनम्॥
शुद्धस्फटिकसङ्काशं संसारार्णवतारकम्।
एवं त्रमनसरोधो देवतात्रयचिन्तनात्।
अग्निर्वाय्यम्बुसंयोगादन्तरं शुध्यते त्रिभिः॥
निरोधादभवद्वायुः तस्मादग्निस्ततो जलम्।
इति त्रिदेवतायोगात् शुद्धत्वेन पुनर्द्विजा॥
भवन्ति प्रणवोपेताः प्राणायामस्तु यं डग।
अपि भ्रूणहनं मासात् पुनात्यहरहः क्रमः॥
मातरघ्नस्तायत्र पूरकं ब्रह्मणोऽन्तिकम्।
रेचकेन तृतीयेन प्राप्नुयात् परमं पदम्।
न प्राणेनाप्यपानेन वायुवेगेन रेचयेत्॥
प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसंयमी।
शरीरस्थं शिरोग्रीव विद्यपाणि च पादयम्॥
सर्वाङ्गं निश्चलं धार्य्यमापूर्य्य सर्वनाडिकाः।
सङ्घृत्याङ्गानि सर्वाणि कर्मविज्ञानसद्‌द्विजः॥
बद्धासनो चलाङ्गस्तु कुर्यादसुनिरोधनम्।
ज्ञात्वासुसञ्चय विद्वान् विधिवत्संस्पृशेत्॥
अन्तरे शुध्यते यस्मात् कुर्यादाचमनं स्मृतम्।
इत्युक्त प्राणसंरोधो देवतात्रयसङ्गुत॥
त्रिमात्रप्रणवस्तत्र ध्यात्व्य सर्वयोगिभि।

स्वयंमाणस्य वातस्य विश्रान्तिः स्वादमात्रकैः ॥
तत्परं निष्फलं ज्ञानं तद्विदुर्ब्रह्मचिन्तकाः।
मृदुमध्योत्तमत्वाच्च स्थूलसूक्ष्मानुभावतः ॥
त्रिविधं प्राणसंरोधं विदुस्तत्त्ववेदिनः ।
क्रियमाणो विशेषेण प्रत्याहारोऽयमुच्यते ॥
सर्वं प्रागुक्तमेव स्याद्विशेषं तु निबोधत ।
वाह्यं वायुं यथोत्साहं आरुध्य यच्छनैः शनैः ॥
निरुध्य विधिवद्योगी प्रत्याहारः स उच्यते ।
व्याहृत्यातिसुखी यत्र खानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते ।
प्राणाद्यवयवस्यूना, सकलस्यादासुवायवः ॥
निरोद्धव्या इतोऽप्येते प्राणसंयमकारिभिः ।
वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेण समन्ताच्च न यानादिक्रिया स्मृता ।
भविष्यातीतकालेभ्यः कर्मभ्यश्चाम् संयमो ॥
सर्वानिलांस्तथा खानि निरुध्यैकत्र धारयेत् ।
स धीमान्वेदविद्विद्वान्स योगी ब्रह्मवित्तम ॥
स्थान द्विजेन्द्रा विधिवत् अङ्गस्य सांगस्य यदृयातिविधिः परस्य
पाराशरोक्तैर्बहुभिः प्रकारैः रुक्तोविधिः प्राणनिरोधनस्य ॥
प्रत्याहारो विशेषस्तु मोक्षशास्त्रैव वित्तमाः ।
यदभ्यस्याप्नुयाद्ब्रह्म सर्वदा नैदमव्ययम् ॥
इति श्रीवृहत्पाराशरे प्राणायामप्रत्याहारविधिः ।

---

यातैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ।
संसृतिं नाप्नुयाद्येन शक्रस्तु गुरुरब्रवीत् ॥
उक्तोऽसि संयमः पूर्वं विधिहीनो हि नाशनः ।
निबोधस्व चतुर्थन्तु ध्यानं प्रणवैर्विधाः ॥
विधिवत्प्रणवध्यानमेकचित्तस्तु योऽभ्यसेत् ।
ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां वरः ॥
तद्ध्यानमसुसंरोध तुर्यमस्याभिधोच्यते ।
तद्ध्यानं पिचन्तु चिन्तापिंचविवर्जितम् ॥
तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरुहे ।
तद्देयन्तद्वरेण्यन्तु मुक्तिबीजं तदुच्यते ॥
सञ्चिन्त्य व्याहृतीः सप्त प्रणवाद्याः सादन्तकाः ।
सम्यगुक्तमिदं ध्यात्वा परब्रह्मणि योजयेत् ॥
हुतभुक् पवनो जीवस्त्रयोऽप्येते हृदि स्थिताः ।
ये तत्सर्वन्तु वैकत्र संसारे ध्यानकाङ्क्षिणः ॥
ॐकारावर्त्तनालेन उद्धृत्य परियोजयेत् ।
योजयेत्सर्वमेवैतत्सिद्धयोगी स उच्यते ॥
शून्यभूतं तु यत्प्राणो ह्रासजीवितसंज्ञितम् ।
यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशयेत् ॥
आद्यन्तप्रणवं विद्वान् घटाकाशवदुत्सृजेत् ।
स पश्यन् निर्गलं योगीपुरुषं समं शैशयम् ॥
अन्तर्वक्त्रः बहिः रम्यकुण्डलीभूतसर्पवत् ।
ध्यातव्यः प्रणवस्तस्य मध्यमं धाम सञ्चरेत् ॥
स ध्यातात्मा स बिन्दुश्च तदेव परमं पदम् ।
तदभ्यस्य हि तज्ज्ञात्वा स तस्मिन्नेव लीयते ॥

प्रथमं प्रणवो वक्ता स्वाक्षरः परमाक्षर ।
स्वजत्वमन्यदाप्नोति समाप्य परमं पदम् ॥
पञ्चमं तु पंद विद्वन् । हन्त्रूर्ध्वन्यवतिष्ठते ।
नाऽर्विन्दु समाख्यातोद्दिजेन्द्रा.। परमंपदम् ॥
यत्प्राप्य न निवर्त्तन्ते भूयस्तस्मात्यमेव च ।
सर्वेभ्यो मातृकावर्णा पुनस्तत्र विशन्ति च ।
वर्णात्मास्तन्तवर्णास्तु समस्तं वर्णजीवनम् ॥
न दीर्घ न च ह्रस्वञ्च न घोषं नाप्यघोषवत् ।
न विसर्गस्य वा विद्वान् नानुस्वारविपर्यय ॥
हृद्याकाशनिविष्ट यदचलत्व प्रयाति चेत् ।
ज्ञानयोगे निपद्दिवै यो विभर्त्यक्षराणि तु ॥
तत्पर योगिभिर्ध्येय व्योम यस्य तु मध्यमम् ।
व्योमान्तगं यत्तुध्येयमनन्ताकाशमव्ययम् ॥
चिन्तयामो वयं तत्त्वं धियो यो न प्रचोदयात् ।
ये तद्ब्रह्मावयोरेषु मेतद्धर्म त्वयोमया ॥
येषां स परमा मुक्ति र्गत्वा या न निवर्त्तते ।
आदाय चापं प्रणवं च बाणां सन्धाय चामानमवेषलक्ष्यम् ॥
सम्यग्विधिं त प्रविविष्य तस्मिन् प्राप्नोति योगी स तु मुक्तिधाम
उद्देशभक्तिं विधिनादि विद्वन् । ध्यानं विधेय ध्वनिपूर्व्वकञ्च ॥
सर्वं विधानं विधियञ्च सम्यग् यत्न सामर्थ्योविधिरेव चास्य ॥

इति श्रीबृहत्पाराशरीये योगाध्यायप्रणव
ध्यानविधि सम्पूर्णं ।

---

